**राधिका**—(सव्यथम् । संस्कृतेन ।)

अजडः कम्पसंपादी शस्त्रादन्यो निकृन्तनः ।
तापनोऽनुष्णताधारः कोऽयं वा मुरलीरवः ॥ ३५ ॥

(इत्युद्वेगं नाटयन्ती ।) हॆला, णाहं मुरलीणाअस्स अणहिण्णा । ता अलं विप्पलम्भेण । फुडं एसो केण वि महाणाअरेण कोवि मोहणमन्तो पढीअदि ।

(प्रविश्य चित्रपटहस्ता विशाखा ।)

**विशाखा**—(राधामवधारयन्ती स्वगतम् ।) दॆाणिं अण्णादिसी एसा लक्खीअदि । ता णूणं कण्हस्स वंसिआए डंसिदा । होदु । पुच्छिस्सम् । (इत्युपसृत्य प्रकाशम् । संस्कृतेन ।)

क्षोणीं पङ्किलयन्ति पङ्कजरुचोरक्ष्णोः पयोबिन्दवः
श्वासास्ताण्डवयन्ति पाण्डुवदने दूरादुरोजांशुकम् ।
मूर्तिं दन्तुरयन्ति संततममी रोमाञ्चपुञ्जाश्च ते
मन्ये माधवमाधुरी श्रवणयोरभ्याशमभ्याययौ ॥ ३६ ॥

---

१ हला, नाहं मुरलीनादस्यानभिज्ञा । तदलं विप्रलम्भेन । स्फुटमेष केनापि महानागरेण कोऽपि मोहनमन्त्रः पठ्यते ।

२ इदानीमन्यादृशी एषा लक्ष्यते । तन्नूनं कृष्णस्य वंशिकया दष्टा । भवतु । प्रक्ष्यामि ।

---

तं नादं अहं न जाने येन नादेन प्रयोजककर्त्रा ॥ **अजड इति** । अजडो हिमभिन्नः । निकृन्तनश्छेदकः । 'कृती छेदने' इत्यपि धातुरस्ति । न उष्णतां धारयतीत्यनुष्णताधारः ॥ **हलेति** । विप्रलम्भेन प्रतारणावाक्येन ॥ **प्रक्ष्यामीति** । प्रश्नं करिष्यामि ॥ **क्षोणीमिति** । पङ्किलयन्ति पङ्किलीकुर्वन्ति । ताण्डवयन्ति ताण्डवयुक्तं कुर्वन्ति । मत्वन्ताण्णिचो 'विन्मतोर्लुक्' इति मतुपो लुक् । दन्तुर-

**राधिका**—(अनाकर्णितकेनैव सोत्कम्पम् ।) [1]ललिदे, पुणो एसो सो ज्जेव्व कोवि सद्दो विक्कमदि ।

**ललिता**—(संस्कृतेन ।)

एष स्थैर्यभुजङ्गसङ्घदमनासङ्गे विहङ्गेश्वरो
　व्रीडाव्याधिधुराविधूननविधौ तन्वङ्गि धन्वन्तरिः ।
साध्वीगर्वभराम्बुराशिचुलुकारम्भे तु कुम्भोद्भवः
　कालिन्दीतटमण्डलीषु मुरलीतुण्डाद्ध्वनिर्धावति ॥ ३७ ॥

**राधिका**—[2]सहि, जादा मह हिअए कावि गुरुई वेअणा । ता गदुअ सुपिस्सम् ।

**विशाखा**—[3]हला राहे, तुह वेअणाविद्धंसणं किंवि एदं ओसहं मह हत्थे वट्टदि । ता सेवेहि णम् ।

**राधिका**—[4]विशाखे, एहि । अङ्गणोवकण्ठे फुल्लकण्णिआरमण्डलीच्छाअं अज्झासिअ पेक्खम्ह ।

(इति निष्क्रान्ताः सर्वे ।)

इति वेणुनादविलासो नाम प्रथमोऽङ्कः ।

---

१ ललिते, पुनरेष स एव कोऽपि शब्दो विक्रमते ।

२ सखि, जाता मम हृदये कापि गुर्वी वेदना । तद्गत्वा स्वप्स्यामि ।

३ सखि राधे, तव वेदनाविध्वंसनं किमप्येतदौषधं मम हस्ते वर्तते । तत्सेवस्वैतत् ।

४ विशाखे, एहि । अङ्गणोपकण्ठे फुल्लकर्णिकारमण्डलीच्छायामध्यास्य प्रेक्ष्यावहे ।

---

यन्ति कण्टकितां कुर्वन्ति । अभ्याशं निकटम् ॥ **अनाकर्णितेति** । अनाकर्णितकेन । नाट्योक्तावश्रुतेनेत्यर्थः । तथा च विशाखावाक्यं श्रुतमश्रुतं कृतमिति सोत्कम्पं यथा स्यात्तथा आह—**पुनरिति** ॥ **एष स्थैर्येत्यादि** । स्थैर्यरूपसर्पसमूहस्य दमनासक्तो विहङ्गेश्वरो गरुडः ॥ **विशाखे इत्यादि** । शयनगृहस्याङ्गणनिकटे ॥ इति विदग्धमाधवे प्रथमोऽङ्कः ॥

## द्वितीयोऽङ्कः ।

(ततः प्रविशति नान्दीमुखी ।)

**नान्दीमुखी**—[1]आदिट्ठम्हि तत्तहोदीए पौर्णमासीए, जधा—अइ णन्दीमुहि, सुदं मए णिब्भरा असुत्थसरीरा मे वच्छा राही । ता गदुअ जाणीहि से तत्तं त्ति । तदो मुहराघरं गमिस्सम् । (इति परिक्रम्य पुरः पश्यन्ती ।) कहं इध ज्जेव्व कन्दन्ती मुहरा आअच्छइ ।

(प्रविश्य ।)

**मुखरा**—[2]हद्धी हद्धी । हदम्हि मन्दभाइणी ।

**नान्दीमुखी**—[3]अज्जे मुहरे, कीस रोअसि ।

**मुखरा**—(विलोक्य ।) [4]वच्छे, राहीसंदावेण ।

**नान्दीमुखी**—[5]केरिसं चेट्ठई राही ।

**मुखरा**—[6]वच्छे, वाउला भविअ किंवि पलवइ । (इति संस्कृतेन ।)

क्रूराणामलिनां कुलैर्मलिनया कृत्यं न मे मालया

बालाहं किमु नर्मणस्तव पदं दूरीभव प्राङ्गणात् ।

---

१ आदिष्टास्मि तत्रभवत्या पौर्णमास्या, यथा—अयि नान्दीमुखि, श्रुतं मया निर्भरा अस्वस्थशरीरा मे वत्सा राधा । तद्गत्वा जानीह्यस्यास्तत्त्वमिति । ततो मुखरागृहं गमिष्यामि । कथमित एव क्रन्दन्ती मुखरा आगच्छति ।

२ हा धिक् हा धिक् । हतास्मि मन्दभागिनी ।

३ आर्ये मुखरे, कस्माद्रोदिषि ।

४ वत्से, राधासंतापेन ।

५ कीदृशं चेष्टते राधा ।

६ वत्से, वातुला भूत्वा किमपि प्रलपति ।

---

तदिदानीं चित्रपटं दृष्ट्वा अत्युन्मत्ताया राधायाः प्रलापादिकं पौर्णमासीमुखराद्याः साक्षात्परम्परया श्रुत्वोद्विग्ना बभूवुः । एतन्मध्ये पौर्णमासी कथं राधिकाऽस्वस्थशरीरा जातेति विशेषेण ज्ञातुं नान्दीमुखीं तन्निकटे प्रस्थापयति—तत इति ।

इत्यादीनि दुरक्षराणि परितः स्वप्ने तथा जागरे
जल्पन्ती जलजेक्षणा क्षपयति क्लेशेन रात्रिंदिवम् ॥ १ ॥

**नान्दीमुखी**—(स्वगतम् ।) [1]उवसग्गकिदा ण क्खु एरिसी पलावमुद्दा । ता दिट्ठिआ विक्कमिदं एत्थ कण्हविलासेण ।

**मुखरा**—[2]वच्छे, अहं गदुअ भअवदीं विण्णविस्सम् । तुमं वेदसीकुञ्जं उवसप्पिअ राहिअं पेच्छ ।

(इति निष्क्रान्ते ।)

(ततः प्रविशति सखीभ्यामुपास्यमाना राधा ।)

**राधा**—(सोद्वेगं स्वगतम् ।) [3]हदहिअअ, जस्स पडिच्छन्ददंसणमेत्तादो ईरिसी दुरूहसंगमा उवत्थिदा दे अवत्था तत्थ वि पुणो राअं वहसि ।

**उभे**—[4]हला राहिए, आमयेहिन्तो विलक्खणो दे वेअणाणुबन्धो लक्खीअदि । ता कीस अम्हेसु तत्तं ण कधेसि ।

(राधिका निःश्वस्य वक्त्रं व्यावर्तयति ।)

---

१ उपसर्गकृता न खल्वीदृशी प्रलापमुद्रा । तद्दिष्ट्या विक्रान्तमत्र कृष्णविलासेन ।

२ वत्से, अहं गत्वा भगवतीं विज्ञापयिष्यामि । त्वं वेतसीकुञ्जमुपसृत्य राधिकां पश्य ।

३ हतहृदय, यस्य प्रतिच्छन्ददर्शनमात्रत ईदृशी दुरूहसंगमा उपस्थिता तेऽवस्था तत्रापि पुना रागं वहसि ।

४ हला राधे, आमयेभ्यो विलक्षणस्ते वेदनानुबन्धो लक्ष्यते । तत्कस्मादस्मासु तत्त्वं न कथयसि ।

---

तत्रभवत्या पूज्यया । परिक्रम्य गत्वा ॥ **दुरक्षराणीति** । तथा च यदि कुलाङ्गनाया राधाया मुखादेतादृशाक्षराणि दैवादन्ये जनाः श्रोष्यन्ति तदा पुरुषान्तरसंगममेव कल्पयिष्यन्तीति भावः ॥ **उवसग्गेति** । उपसर्गोऽत्र ग्रहवैगुण्यम् ॥ **तत इति** । सखीभ्यां ललिताविशाखाभ्याम् ॥ **दुरूहसंगमेति** । तथा च

**विशाखा**—(पुरोऽभिगम्य । संस्कृतेन ।)

चिन्तासंततिरद्य कृन्तति सखि स्वान्तस्य किं ते धृतिं
किं वा सिञ्चसि ताम्रमम्बरमतिस्वेदाम्भसां डम्बरम् ।
कम्पश्चम्पकगौरि लुम्पति वपुःस्थैर्यं कथं वा बला-
त्तथ्यं ब्रूहि न मङ्गला परिजने संगोपनाङ्गीकृतिः ॥ २ ॥

**राधिका**—(सासूयम् ।) अइ णिट्ठुरे विसाहे, तुमं एव्वं पुच्छन्ती वि ण लज्जसि ।

**विशाखा**—(सशङ्कम् ।) हला, कहिं पि अवरद्धम्हि त्ति ण सुमरामि ।

**राधिका**—अइ णिक्किवे, कीस एव्वं भणासि । सुमरिअ पेक्ख ।

**विशाखा**—हला, गरुएण वि पणिहाणेण ण मे सुमरणं होदि ।

**राधिका**—उम्मत्ते, गहणे इमस्सिं अच्चाहिदाणलकुण्डे तुमं जेव्व मह पक्खेवणी ।

**विशाखा**—कधं विअ ।

**राधिका**—(सेर्ष्यम् ।) अइ मिच्छासरले, आलेक्खगदभुअङ्गसङ्गिणि, चिट्ठ चिट्ठ । (इति सर्वैवश्यं संस्कृतेन ।)

---

१ अयि निष्ठुरे विशाखे, त्वमेवं पृच्छन्त्यपि न लज्जसे ।
२ हला, कहिंचिदप्यपराद्धास्मीति न स्मरामि ।
३ अयि निष्कृपे, कस्मादेवं भणसि । स्मृत्वा पश्य ।
४ हला, गुरुणापि प्रणिधानेन न मे स्मरणं भवति ।
५ उन्मत्ते, गहने एतस्मिन्नत्याहितानलकुण्डे त्वमेव मम प्रक्षेपणी ।
६ कथमिव ।
७ अयि मिथ्यासरले, आलेख्यगतभुजङ्गसङ्गिनि, तिष्ठ तिष्ठ ।

---

त्वैतादृशावस्थया सह संगमं कुत्राप्यदृष्टादुरूहणीय इत्यर्थः ॥ **उभे इति** । उभे सख्यौ आहतुः ॥ **चिन्तेति** । डम्बरं समूहः । ताम्रं रक्तवर्णं किं कथं सिञ्चसि तस्मादेतेषां कारणं वद इति भावः ॥ **उन्मत्ते इति** । गहने गभीरे । अत्याहिते विपद्रूपेऽनलकुण्डे ॥ **हलेति** । केन प्रकारेणाहं प्रक्षेपणीत्यर्थः ॥ **अयीति** ।

वितन्वानस्तन्वा मरकतरुचीनां रुचिरतां
पटान्निष्क्रान्तोऽभूद्धृतशिखिशिखण्डो नवयुवा ।

(इत्यर्धोक्तौ वाक्स्तम्भं नाटयति ।)

(सख्यौ सभ्रूभङ्गमन्योन्यं पश्यतः ।)

राधिका—

ध्रुवं तेन क्षिप्त्वा किमपि हसतोन्मादितमतेः
शशी वृत्तो वह्निः परमहह वह्निर्मम शशी ॥ ३ ॥

ललिता—हला, किं एसो सिविण्णस्स विलासो ।

राधिका—(संस्कृतेन ।)

किं स्वप्नस्य विलक्षणा गतिरियं किं जागरस्याथवा
किं रात्रेरुपसत्तिरेव रभसादह्नः किमह्नाय वा ।
इत्थं श्यामलचन्द्रिकापरिचयस्पन्देन संदीपितै-
रन्तःक्षोभकुलैरहं परिवृता प्रज्ञातुमज्ञाभवम् ॥ ४ ॥

विशाखा—(साकूतम् ।) हला राहे, णूणं एसो दे चित्तविब्भमो जेव क्खणिओ ।

---

१ हला, किमेष स्वप्नस्य विलासः ।
२ हला राधे, नूनमेष ते चित्तविभ्रम एव क्षणिकः ।

---

भुजङ्गः कामुकः ॥ ध्रुवमित्यादि । किमप्यनिर्वचनीयं यथा स्यात्तथा हसता तेन यूना कर्त्रा उन्मादिता मतिर्यस्यास्तथाभूताया मम शशी वह्निर्वृत्तः । तदुद्दीपकत्वेन तापकत्वात् । अहह खेदे । वह्निर्मम शशी । तथा तदपेक्षया मद्धृदयस्थवह्नेरतिशयाधिक्येन स तु मन्निकटे शशीवाभाति । अथवाह्लादकत्वाद्वह्निरेव मम शशी । वह्नौ प्रवेशः कर्तव्य इति भावः ॥ किमिति । किमियं स्वप्नस्य विलक्षणा गतिः । अतो हेतो रभसाद्वेगात्किं रात्रेरुपसत्तिरियम् । किं शीघ्रमेव रात्रिरुपसत्तेरर्थः । किं वा जागरस्य विलक्षणा गतिः । अतो हेतोः किं वाह्नाय शीघ्रमह्न

**राधिका**—(साभ्यसूयम् ।) अइ अवीसद्धे, विरमेहि । कीस अप्पणो दोसं झम्पिदुं पउत्तासि । (इति संस्कृतेन ।)

कृतां भक्तिच्छेदैर्घुसृणघनचर्चामधिवह-
न्पुनर्लब्धो लुब्धः प्रियकतरुमूले चटुलधीः ।
लपन्त्याः साक्षेपं नहि नहि नहीति स्मितमुखो
हठान्मे दुर्लीलः स किल भुजवल्लीदलमधात् ॥ ५ ॥

ततश्च ।

दरोन्मीलन्नीलोत्पलदलरुचस्तस्य निबिडा-
द्विरूढानां सद्यः करसरसिजस्पर्शकुतुकात् ।
वहन्ती क्षोभाणां निवहमिह नाज्ञासिषमिदं
क वाहं का वाहं चकर किमहं वा सखि तदा ॥ ६ ॥

(इति वैवश्यं नाटयन्ती स्वगतम् ।) अइ दुट्ठहिअअ मक्कड, कण्हो वेणविओ सामलकिसोरो त्ति तिणेसु पुरिसेसु राअं वहन्तो वि तुमं ण लज्जसि । ता दाणिं अप्पाणं वावादिअ पामरं तुमं हदासं करिस्सम् ।

---

१ अयि अविश्वस्ते, विरम । कस्मादात्मनो दोषमाच्छादयितुं प्रवृत्तासि ।
२ अयि दुष्टहृदय मर्कट, कृष्णो वैणविकः श्यामलकिशोर इति त्रिषु पुरुषेषु रागं वहदपि त्वं न लज्जसे । तदिदानीमात्मानं व्यापाद्य पामरं त्वां हताशं करिष्ये ।

---

उपसत्तिरियम् । किं शीघ्रमेव दिनमुपसन्नमित्यर्थः । इत्थमनेन प्रकारेण स्वप्नजागरौ रात्रिदिवसौ च प्रकर्षेण ज्ञातुमज्ञाभवम् । यतोऽहं श्यामलेत्यादि ॥ **कृतामित्यादि** । भक्त्या अङ्गुल्यादिवैचित्रीभिर्विभागेन ये छेदास्तैः कृतां कुङ्कुमचर्चां बाह्वादौ वहन् । प्रियकः कदम्बः ॥ **दरोन्मीलदिति** । तस्य करसरसिजस्पर्शकुतुकाद्धेतोः विरूढानां उत्पन्नानां क्षोभाणां निवहं वहन्ती अहं इदं न अज्ञासिषम् । तस्य कीदृशस्य । दर ईषदुन्मीलतां नीलोत्पलानां दलेषु रुच इव रुचः कान्तयो यस्य । स्पर्शकुतुकात्कीदृशात् । निबिडात् । व्यापाद्य नाशयित्वा ॥

**ललिता**—हंन्त, हतमम्महसचिवस्स वसन्तस्स विप्फुज्जिदेण दूसिदा एदे परिसरा दीसन्ति । ता किं एत्थ सरणम् ।

**राधिका**—(संस्कृतेन ।)

विक्रीडन्तु पटीरपर्वततटीसंसर्गिणो मारुताः
खेलन्तः कलयन्तु कोमलतरां पुंस्कोकिलाः काकलीम् ।
संरम्भेण शिलीमुखा ध्वनिभृतो विध्यन्तु मन्मानसं
हास्यन्त्याः सखि मे व्यथां परममी कुर्वन्ति साहायकम् ॥ ७ ॥

**उभे**—(सास्रम् ।) हेला, एदाहिं घोरचिन्ताहिं कीस किलिम्मसि । अम्हेहिं तक्किदं अदिमेत्तदुल्लहो ण क्खु दे हिअअट्ठिदो अत्थो ।

**राधिका**—(निःश्वस्य संस्कृतेन ।)

इयं सखि सुदुःसाध्या राधाहृदयवेदना ।
कृता यत्र चिकित्सापि कुत्सायां पर्यवस्यति ॥ ८ ॥

---

१ हन्त, हतमन्मथसचिवस्य वसन्तस्य विस्फूर्जितेन दूषिता एते परिसरा दृश्यन्ते । तत्किमत्र शरणम् ।

२ हला, एताभिर्घोरचिन्ताभिः कस्मात्क्लाम्यसि । अस्माभिस्तर्कितमतिमात्रदुर्लभो न खलु ते हृदयस्थितोऽर्थः ।

---

**हन्तेति** । विस्फूर्जितेन विक्रमेण । परिसराः प्रदेशाः । 'शरणं गृहरक्षित्रोः' इत्यमरः । तथा च कोऽत्र रक्षिता भविष्यतीत्यर्थः ॥ **विक्रीडन्त्विति** । पटीरपर्वतो मलयाचलः । संरम्भेण ओघेन । ध्वनिभृतः शिलीमुखाः भ्रमराः । व्यथां हास्यन्त्याः त्यक्ष्यन्त्याः साहायकं साहाय्यम् । तथा च मलयानिलादिरूपोद्दीपनैः करणैः शीघ्रमेव प्राणेषु विनष्टेषु मम चिराय दुःखं न भविष्यतीति भावः ॥ **इयमिति** । कुत्सायामिति । वेदनाया अनिवृत्तौ चिकित्सकस्यैव निन्दा स्यादित्यर्थः । तथा च पुरुषत्रये एकक्षण एव वासनावत्या मम एकपुरुषानयनेऽपि वेदना न

तो विण्णवेमि इमस्सिं ओसरे जधा सुदिढं एक्कं लदापासं लहेमि तधा सिणेहस्स णिक्किदिं करेध ।

**उभे**—(सव्यथम् ।) हला, एवं दारुणं भणन्ती मा क्खु सहीणं जीविदं लुम्पेहि । णं पच्चासण्णा दे अहीट्ठसिद्धी ।

**राधिका**—सहीओ, ण जाणीध इमाए हदराहीए हिअदुट्ठत्तणम्, जं एवं मन्तेध ।

**उभे**—कधिदं जेव सव्वं पिअसहीए ।

**राधिका**—णहु णहु, गुरुई लज्जा णिवारेदि ।

**सख्यौ**—हला, अप्पसआसादो वि गुरुओ अम्हेसु तुह सिणेहो लक्खीअदि । ता बहिरङ्गाए लज्जाए को एत्थ अणुरोहो ।

**राधिका**—(संस्कृतेन ।)

एकस्य श्रुतमेव लुम्पति मतिं कृष्णेति नामाक्षरं
सान्द्रोन्मादपरम्परामुपनयत्यन्यस्य वंशीकलः ।

---

१ तर्हि विज्ञापयाम्येतस्मिन्नवसरे यथा सुदृढमेकं लतापाशं लभेय तथा स्नेहस्य निष्कृतिं कुरुथ ।

२ हला, एवं दारुणं भणन्ती मा खलु सखीनां जीवितं लुम्प । नूनं प्रत्यासन्ना तेऽभीष्टसिद्धिः ।

३ सख्यः, न जानीथ एतस्या हतराधाया हृदयदुष्टत्वम्, यदेवं मन्त्रयथ ।

४ कथितमेव सर्वं प्रियसख्या ।

५ नहि नहि, गुर्वी लज्जा निवारयति ।

६ हला, आत्मसकाशतोऽपि गुरुरावयोस्तव स्नेहो लक्ष्यते । तद्बहिरङ्गाया लज्जायाः कोऽत्रानुरोधः ।

---

स्यति । गूढाभिप्रायः पश्चाद्व्यक्तीभविष्यतीति भावः ॥ **तर्हीति** । तेन पाशेन कण्ठं निबध्य प्राणांस्त्यक्ष्यामि इति भावः ॥ **सख्य इति** । दुष्टत्वं पश्चाद्व्यक्तीभ-

एष स्निग्धघनद्युतिर्मनसि मे लग्नः सकृद्वीक्षणा-
त्कष्टं धिक्पुरुषत्रये रतिरभून्मन्ये मृतिः श्रेयसी ॥ ९ ॥

**उभे**—(सहर्षम् ।) हला, कधं तुम्हादिसीणं गोउलसुन्दरीणं गोउलिन्दणन्दणं उज्झिअ अपरस्सिं अणुराओ संभवदि । ता सुणाहि । एक्को ज्जेव एसो महाणाअरो कण्हो ।

**राधिका**—(सोच्छ्वासमात्मगतम् ।) हिअअ, समास्सस समास्सस । दाणिं जादा तुह जीअलोअणिवासलालसा ।

**उभे**—(संस्कृतेन ।)

सा सौरभोर्मिपरिदिग्धदिगन्तरापि
वन्ध्यं जनुः सुतनु गन्धफली बिभर्ति ।
राधे न विभ्रमभरः क्रियते यदङ्के
कामं निपीतमधुना मधुसूदनेन ॥ १० ॥

**नान्दीमुखी**—(परिक्रम्य ।) कहं अग्गदो जेव एसा राही । (इत्युपसृत्य ।) जअदु जअदु पिअसही ।

**राधिका**—(सावहित्थम् ।) सहि, कुसलं भअवदीए ।

---

१ हला, कथं युष्मादृशीनां गोकुलसुन्दरीणां गोकुलेन्द्रनन्दनं त्यक्त्वा अपरस्मिन्ननुरागः संभवति । तच्छृणु । एक एवैष महानागरः कृष्णः ।

२ हृदय, समाश्वसिहि समाश्वसिहि । इदानीं जाता तव जीवलोकनिवासलालसा ।

३ कथमग्रत एवैषा राधा । जयतु जयतु प्रियसखी ।

४ सखि, कुशलं भगवत्याः ।

---

विष्यति ॥ प्रियसख्या राधया ॥ सेति । गन्धफली चम्पकः । मधुसूदनो भ्रमरः कृष्णश्च । व्यपदेशेन तव सौन्दर्यादीनां कृष्णसंभोगं विना वैफल्यमित्युक्तं भवति ॥

**नान्दीमुखी**—तुह उल्लाहत्तणे जादे (इति राधां निभाल्य स्वगतम्।) अप्पेक्खिअ चेअ मए पढमं णिट्टङ्किदम्। तधावि पुच्छिस्सम्। (प्रकाशम्। संस्कृतेन।)

न मुग्धे वैदग्धीगरिमपरिदिग्धा तव मति-
र्विरामो नेदानीमपि वपुषि बाल्यस्य वयसः।
कमप्यन्तःक्षोभं प्रथयसि तथापि त्वमथवा
सखि ज्ञातं वृन्दावनमदनविस्फूर्जितमिदम्॥ ११॥

**ललिता**—अइ अलिआसङ्किणि, सीदल्दक्खिणाणिलहेतुअं कम्पपुलअं पेक्खिअ कीस दूसहं परिवादं देसि।

**नान्दीमुखी**—(सस्मितम्। संस्कृतेन।)

रोमाञ्चः परिचेष्यते कथमयं नास्माभिरुत्कम्पवा-
न्दुष्कीर्तिं नहि दक्षिणाय मरुते दाक्षिण्यशून्ये वद।
एतन्मन्मथकोटिसंभ्रमभरैर्वम्भ्रम्यते सुभ्रुवः
स्वान्ते नागरचक्रवर्तिनयनप्रान्तस्य लीलायितम्॥ १२॥

ता सच्चं कहेहि। कदा एदाए पच्चक्खीकिदो गोउलाणन्दो।

---

१ तव उल्लाघत्वे जाते अप्रेक्ष्यैव मया प्रथमं निष्टङ्कितम्। तथापि प्रक्ष्यामि।

२ अयि अलीकाशङ्किनि, शीतलदक्षिणानिलहेतुकं कम्पपुलकं प्रेक्ष्य कस्माद्दुस्सहं परिवादं ददासि।

३ तत्सत्यं कथय। कदा एतया प्रत्यक्षीकृतो गोकुलानन्दः।

---

**तवेति**। उल्लाघो निर्व्याधिः। 'उल्लाघो निर्गतो गदात्' इत्यमरः। निष्टङ्कितम्। निर्धारितमित्यर्थः। प्रक्ष्यामि प्रश्नं करिष्यामि॥ **नेति**। परिदिग्धा परिचिता तव मतिः। यतः॥ विराम इत्यादि। प्रथयसि प्रकटयसि। वृन्दावनमदनो मदन-गोपाल एव तस्य विस्फूर्जितं पराक्रमः॥ **रोमाञ्च इति**। उत्कृष्टकम्पवान् रोमाञ्चः कथं स्त्रीजातिभिरस्माभिर्न परिचेष्यते। हे दाक्षिण्यशून्ये, दक्षिणाय दक्षिणदेशोद्भवाय, पक्षे अनुकूलाय। मन्मथकोटितः ये संभ्रमभराश्चिन्तावेगातिशया-

**विशाखा**—एव्वं णेदम्¹ ।

**नान्दीमुखी**—(संस्कृतेन ।)

दरविचलितबाल्या वल्लभा बान्धवानां
विहरसि भुवने त्वं पत्युरामोदपात्री ।
अहह पशुपरामाकामिनो मोहनत्वं
त्वमपि यदमुनान्तर्बाढमुन्मादितासि ॥ १३ ॥

तो अहं भअवदीं तुवरेदुं गमिस्सम्² । (इति निष्क्रान्ता ।)

**राधिका**—(विमृश्य । संस्कृतेन ।)

सा कल्याणी कुलयुवतिभिः शीलिता धर्मशैली
द्रागस्माभिः कथनविनयोत्फुल्लमुल्लङ्घनीया ।

(इत्यर्धोक्ते । पुनः सोत्कण्ठम् ।)

हा दृग्भङ्गीपरिमलकलाकर्मठोऽयं कथं वा
हातुं शक्यः पशुपनगरीनागरीनागरेन्द्रः ॥ १४ ॥

(ततः प्रविशति नान्दीमुखीमुखराभ्यामनुगम्यमाना पौर्णमासी ।)

**पौर्णमासी**—मुखरे, किमदुःसाधबाधा तर्किता त्वया राधा ।

---

१ एवमेतत् ।
२ तदहं भगवतीं त्वरयितुं गमिष्यामि ।

---

स्वैर्हेतुभिः । लीलायितं लीला बम्भ्रम्यते ॥ **एवमिति** । नान्द्योक्तावेवमेतच्छब्देन कृष्णनामश्रवणमुरलीश्रवणचित्रपटदर्शादिरूपपूर्ववृत्तान्तं सर्वं विशाखया कथितमिति ज्ञाप्यते ॥ **दरेति** । दर ईषद्विचलितं बाल्यं यस्याः । पत्युः प्रीतिपात्री । मोहनत्वं मोहकत्वम् । येन अमुना मोहनत्वेन ॥ **सेति** । सा कल्याणीति पुञ्जीभूतजगल्लज्जावतीत्वेऽप्यस्यास्ततोऽप्यधिकपुञ्जीभूतविशिष्टप्रेमभरस्य प्राबल्याल्लज्जांशस्य शैथिल्यमित्यर्थः । धर्मशैली धर्मानुशीलनम् । अविनयेनोत्फुल्लं यथा स्यात्तथा कथं उल्ल-

**मुखरा**—[1]भअवदि, सुणाहि । (संस्कृतेन ।)

अग्रे वीक्ष्य शिखण्डखण्डमचिरादुत्कम्पमालम्बते
गुञ्जानां च विलोकनान्मुहुरसौ सास्रं परिक्रोशति ।
नो जाने जनयन्नपूर्वनटनक्रीडाचमत्कारितां
बालायाः किल चित्तभूमिमविशत्कोऽयं नवीनो ग्रहः ॥१५॥

**पौर्णमासी**—(स्वगतम् ।) सोऽयमुद्दण्डस्य नवानुरागराशेः कोऽपि चण्डिमा । (प्रकाशम् ।) मुखरे, साधु विज्ञातम्, यदत्र दानवकुलावतंसाः कंसादयो राधामन्विष्यन्ति तेन कोऽप्ययमङ्गनाग्रहो बालामाविवेश ।

**मुखरा**—[2]भअवदि, को एत्थ पडिआरो ।

**पौर्णमासी**—अपि दानवारेर्दृष्टिरेव ।

**मुखरा**—[3]भअवदि, कुडिला क्खु जडिला एदं णाहिणन्दिस्सदि ।

**पौर्णमासी**—मुखरे, सा खलु मद्गिरा संदिश्यताम्—'जटिले, मा शङ्किष्ठाः । कृष्णमात्मविद्ययैव संघटयिष्यामि' इति ।

(मुखरा नमस्कृत्य निष्क्रान्ता ।)

---

1 भगवति, शृणु ।
2 भगवति, कोऽत्र प्रतीकारः ।
3 भगवति, कुटिला खलु जटिला इदं नाभिनन्दिष्यति ।

---

क्षनीया । परिमलः प्रकाशस्तत्र या कला वैदग्धी तत्र कर्मठोऽयम् । न दुःसाधा बाधा यस्यास्तथाभूता कथित्तर्किता इत्यर्थः ॥ **कोऽप्ययमिति** । पक्षे अङ्गनासु आग्रहो यस्य स कृष्णः ॥ **सा खल्विति** । सा जटिला त्वया मद्गिरा संदिश्यताम् । संदेशमेवाह—आत्मविद्ययैव स्पष्टं कृष्णं राधानिकटे घटयिष्यामि, न तु नन्दपु-

**पौर्णमासी**—(उपसृत्य ।) वत्से, निजाभीष्टलाभेन कृतार्थीभूयाः ।

(राधा सावहित्थं प्रणमति ।)

**पौर्णमासी**—(स्वगतम् ।)

भजन्त्याः सव्रीडं कथमपि तदाडम्बरघटा-
मपह्नोतुं यत्नादभिनवमदामोदमधुरा ।
अधीरा कालिन्दीपुलिनकलभेन्द्रस्य विजयं
सरोजाक्ष्याः साक्षाद्वदति हृदि कुञ्जे तनुवनी ॥ १६ ॥

(पुनर्निरूप्य जनान्तिकम् ।) हन्त नान्दीमुखि, निर्भरगभीरप्रेमोर्मिनिर्मित-मनःक्षोभा किमप्येषा विचेष्टते । तदियमवधार्यतामनुरागवीरस्य कापि दुर्विबोधगभीरविक्रमवैचित्री । तथा हि ।

प्रत्याहृत्य मुनिः क्षणं विषयतो यस्मिन्मनो धित्सते
बालासौ विषयेषु धित्सति ततः प्रत्याहरन्ती मनः ।
यस्य स्फूर्तिलवाय हन्त हृदये योगी समुत्कण्ठते
मुग्धेयं बत पश्य तस्य हृदयान्निष्क्रान्तिमाकाङ्क्षति ॥ १७ ॥

**नान्दीमुखी**—[1]भअवदि, ईरिसस्स भाअस्स विण्णाणे मूढम्हि ।

**पौर्णमासी**—वत्से, सत्यमात्थ । दुर्गमोऽयं गाढानुरागविवर्तः । श्रूयताम् ।

---

१ भगवति, ईदृशस्य भावस्य विज्ञाने मूढास्मि ।

---

त्रम् । इति हेतोर्जटिले, त्वं मा शङ्किष्ठाः ॥ **भजन्त्या इति** । कालिन्दीपुलिनकलभेन्द्रस्य कृष्णस्य राधाया हृदयरूपकुञ्जे विजयं पराक्रमं तनुरेव वनी वदति सूचयति । वनीलल्पविवक्षायां ङीत्वम् । राधायाः कीदृश्याः । तदाडम्बरघटां अपह्नोतुं संगोपयितुं यत्नाद् भजन्त्याः । वन पक्षे हस्तिकुम्भस्थमदस्य आमोदेन मधुरा । जनान्तिकं एकान्ते ॥ **वत्स इति** । विवर्तो विकारविशेषः ॥ **पीडा-**

पीडाभिर्नवकालकूटकटुतागर्वस्य निर्वासनो
 निःस्यन्देन मुदां सुधामधुरिमाहंकारसंकोचनः ।
प्रेमा सुन्दरि नन्दनन्दनपरो जागर्ति यस्यान्तरे
 ज्ञायन्ते स्फुटमस्य वक्रमधुरास्तेनैव विक्रान्तयः ॥ १८ ॥

तदेहि । भावमस्याः परीक्षेवहि । (इत्युपसृत्य ।) वत्से, किमपि प्रष्टव्यासि ।

यतिः प्रेमोदात्तः सुचरितकथा गोकुलपुरे
 प्रसिद्धा ते शुद्धे जनिरपि च लक्ष्मीवति कुले ।
अपूर्वां कुर्वाणा मतिमिह महासाहसमयीं
 सुहृद्भ्यस्त्वं लज्जामपि किमिव राधे न भजसि ॥ १९ ॥

(राधिका कातर्यमभिनीय सलज्जं ललिताकर्णमूले लगति ।)

ललिता—अज्जे, विण्णवेदि राही । (इति संस्कृतेन ।)

दोषोद्गारं त्वमपि कुरुषे हा मयि व्याकुलायां
 पादेऽभ्यस्ते भगवति शपे नापराध्यामि साध्वि ।

---

१ आर्ये, विज्ञापयति राधा ।

---

भिरित्यादि । पीडाभिः कटुतागर्वस्य निर्वासनं निःसारणं यतः मुदां आनन्दानां निःस्यन्देन क्षरणेन सुन्दरि नान्दीमुखि, जागर्तीति स्वरूपलक्षणकथनं सदा जाग्रदेव तिष्ठति । न तु प्रेम्णः स्वापः संभवतीत्यर्थः । तेनापि ज्ञायन्ते केवलमनुभूयन्ते, न तु वक्तुं शक्यन्ते । तद्वाचकशब्दाभावादिति भावः । वक्रमधुराः अस्य माधुर्यस्य वक्र एव मार्गः कश्चित्तादृशज्ञानानुभवैकमात्रगोचर इत्यर्थः । अयं भावः—अयं प्रेमा प्रश्नोत्तराभ्यां न ज्ञातुं शक्यः । किं तु कथंचिदतिभाग्येनैतत्सजातीयप्रेम्णश्चेदाश्रयः स्यात्तदा कण्टकवेधस्य व्यथास्वादस्यानुसारेण शक्तिवेधव्यथाया इवैतस्य ज्ञानं स्यादिति तेनात्मनस्तथाभावे भवत्या यतितव्यमिति ॥ यतिरिति । यतिः प्रेम्णा उदात्तः प्रफुल्लः । गोकुलपुरे तव सुचरितकथा प्रसिद्धा । शुद्धे लक्ष्मीवति च कुले तव जनिः ॥ दोषोद्गारमिति । कर्णस्योत्पलं वलयिभि-

पर्णैः कर्णोत्पलवलयिभिस्ताड्यमानोऽपि धूर्तो
न श्यामात्मा मम तनुपरिष्वङ्गरङ्गं जहाति ॥ २० ॥

**पौर्णमासी**—(सेर्ष्यमिवालोक्य ।) मुग्धे, किमन्यां प्रौढमुद्रां नोद्दण्डयसि ।

**राधा**—(सरोषम् । संस्कृतेन ।)

क्रोशन्त्यां करपल्लवेन बलवान्सद्यः पिधत्ते मुखं
धावन्त्यां भयभाजि विस्तृतभुजो रुन्धे पुरः पद्धतिम् ।
पादान्ते विलुठत्यसौ मयि मुहुर्दष्टाधरायां रुषा
मातश्चण्डि मया शिखण्डमुकुटादात्माभिरक्ष्यः कथम् ॥ २१ ॥

**पौर्णमासी**—(स्वगतम् ।) निष्कम्पतया बद्धमूलोऽयं प्रेमपलाशी । (प्रकाशम् ।)

त्वया नीतो वामः फलकमिलदङ्गो मधुरिपुः
सुखाशाभिः क्रीडाकुतुकिनि कुतो नेत्रपदवीम् ।
कुकूलाग्निज्वालापटलकटुकेलिर्यदधुना
दशेयं दन्त त्वां ज्वलयति हिमानीव नलिनीम् ॥ २२ ॥

**राधा**—(कृष्णमुद्दिश्य सोपालम्भमात्मगतम् ।)

शिशिरय दृशौ दृष्ट्वा दिव्यं किशोरमितीक्षितः
परिजनगिरां विश्रम्भात्त्वं विलासफलाङ्कितः ।

---

वेष्टनशीलैः पर्णैः अर्थादुत्पलपत्रैस्ताड्यमानोऽपि ॥ **मुग्ध इति** । अन्यां उच्चैः फूत्कारादिरूपां प्रौढमुद्रां कथं न उद्दण्डयसि ॥ **क्रोशन्त्यामिति** । मातश्चण्डीति । तथाप्यविचारेण मां प्रत्येव कुप्यसि । किं वक्तव्यम् ॥ **निष्कम्पेति** । प्रेमपलाशी प्रेमवृक्षः ॥ **त्वयेति** । वामः प्रतिकूलः किं वा मनोहर इति ज्ञात्वा सुखाशाभिः कुतो नेत्रपदवीं नीत इति । कुकूलं तुषानलः अतितापकत्वविवक्षया अग्निस्तस्य ज्वालासमूहेन कटुः केलिः खेला यस्याः एवंभूता दशा ॥ **शिशिरयेति** । परिजनगिरां विश्रम्भादिति । तर्हि परिजना एव तव दुःखदा इति चेत्तत्राह—

शिव शिव कथं जानीमस्त्वामवक्रधियो वयं
निबिडवडवावह्निज्वालाकलापविकासिनम् ॥ २३ ॥

**पौर्णमासी**—(सस्नेहमालोक्य ।) वत्से, क्षणमेकान्ते निविश्य पुष्पेषु लेखो निर्मीयताम्, यथायं कृष्णाय स्वसखीभ्यां समर्प्यते ।

(राधा सखीभ्यां सह निष्क्रान्ता ।)

**पौर्णमासी**—(परिक्रम्य ।) नान्दीमुखि, कृष्णोऽपि नातिदूरे भविष्यति, यदत्र दक्षिणतो नैचिकीनिकुरम्बस्य हम्बारवाडम्बरोऽयमम्बरमाक्रामति । तदहं स्नानार्थं व्रजामि ।

(इति निष्क्रान्ते ।)

(ततः प्रविशति कृष्णः ।)

**कृष्णः**—(सोद्वेगम् ।)

यदवधि तदकस्मादेव विस्मायिताक्षं
नवतडिदभिरामं धाम साक्षाद्बभूव ।
तदवधि चिरचिन्ताचक्रसक्ता विरक्तिं
मम मतिरुपभोगे योगिनीव प्रयाति ॥ २४ ॥

---

अवक्रधियो वयमिति । बहुवचनेन यथाहं तथैव मत्परिजना अपि सरला एव त्वामेतादृशं तेऽपि कथं जानीयुरतस्त्वमेव दुःखद इत्यर्थः ॥ पूर्वरागे जाते नायिका कन्दर्पलेखं माल्यं च नायकाय दूतीद्वारा समर्पयतीति कामशास्त्ररीत्या पौर्णमास्याह—**वत्स इति** । पुष्पेष्विति सप्तम्यन्तम् । तथा च पुष्पेषु लिखनं कृत्वा कान्तहस्ते सखीद्वारा समर्पय । एवं कन्दर्पलेखश्च अर्थद्वयमपि प्राकरणिकम् ॥ 'गोषु दिव्या तु नैचिकी' इत्यमरः । मम मध्याह्नकृत्यं वर्तते तस्मादहं स्नानार्थं व्रजामीति ॥ **यदवधीति** । योगिनीवेति । ब्रह्मसाक्षात्कारे याते सतीत्यर्थः ॥ पुरोऽग्रे पुष्पवन्तं चम्पकवृक्षमनुसृत्य राधिका स्मृत्यारूढा । तदनन्तरं तस्या बिम्बाधरस्वादस्येन रञ्जणपुष्पं स्मृत्यारूढम् । तत्स्मरणतः रञ्जणमाल्यार्थं प्रस्थितस्य

(पुरोऽनुसृत्य ।) हन्त, रङ्गणमाल्यमुपनेतुं प्रस्थितो वयस्यः कथं विलम्बते ।

(प्रविश्य माल्यहस्तः)

**मधुमङ्गलः**—[1]कधं अज्ज दुम्मणाएदि पिअवअस्सो । होदु । पसङ्गदो जाणिस्सम् । (इति परिक्रम्य कृष्णं पश्यन् । स्वगतम् । संस्कृतेन ।)

फुल्लप्रसूनपटलैस्तपनीयवर्णा-
मालोक्य चम्पकलतां किल कम्पतेऽसौ ।
शङ्के निरङ्कनवकुङ्कुमपङ्कगौरी
राधास्य चित्तफलके तिलकीबभूव ॥ २५ ॥

(इत्युपसृत्य ।) [2]भो, गेण्ह । (इति माल्यं निवेदयति ।)

**कृष्णः**—(अनाकर्णितकेनैव ।)

कनकाद्रिनिकेतकेतकीकलिकाकल्पकलेवरद्युतिः ।
हृदि सा मुदिरालिमेदुरे चपला मां किमलंकरिष्यति ॥ २६ ॥

**मधुमङ्गलः**—(स्वगतम् ।) [3]फलिदं मे तक्केण । (प्रकाशमुच्चैः ।) भो पिअवअस्स, संमुहे विक्कोसन्दं वि कीस मं ण पेच्छसि ।

---

१ कथमद्य दुर्मनायते प्रियवयस्यः । भवतु । प्रसङ्गतो ज्ञास्यामि ।
२ भोः, गृहाण ।
३ फलितं मे तर्केण । भोः प्रियवयस्य, संमुखे विक्रोशन्तमपि कस्मान्मां न पश्यसि ।

---

मधुमङ्गलस्य कृष्णः स्मरति—हन्तेति ॥ फुल्लेति । फुल्लप्रसूनैः करणैः सुवर्णवर्णां चम्पकलताम् । निरङ्को निर्मलः । तिलकशब्दोऽत्र श्रेष्ठार्थकः । तथा च श्रीकृष्णस्य चित्तरूपपटे सर्वा एव व्रजसुन्दर्यो यद्यपि लिखिता भवन्ति तथापि तासां मध्ये राधिका तु तिलकीबभूव । नत्वन्यत्र एतादृशचिन्तापरो मम वयस्यः कदापि दृष्ट इति । राधावर्णस्य सादृश्यं कुङ्कुमस्य, तत्सादृश्यं कनकस्य, तत्सादृश्यं चम्पकलतायाः, तामपि दृष्ट्वा कम्पते । अहो रागोद्रेक इति भावः ॥ अनाकर्णितकेन अत्युत्कण्ठया । मधुमङ्गलस्य वाक्यमश्रुत्वैवाह—कनकेति । मुदिरालिमेदुरे

**कृष्णः**—(सावहित्थम् ।) सखे, चम्पकलताया लावण्याकृष्टेन मया नोपदृष्टोऽसि ।

**मधुमङ्गलः**—[1]सच्चं च्चेअ भणासि, किं तु संचारिणीए चम्पअ-लदाए ।

**कृष्णः**—सखे, काममसंभाव्यश्चम्पकलतायाः संचारः ।

**मधुमङ्गलः**—[2]वअस्स, क्खणं विरमेदु वक्कत्तणम् । उज्जुअं कहेहि कहं सुण्णहिअओसि त्ति ।

**कृष्णः**—(सस्मितम् ।) सखे, मालां विना ।

**मधुमङ्गलः**—[3]बालं त्ति भण ।

**कृष्णः**—मुधेयं ते विशङ्का ।

**मधुमङ्गलः**—(संस्कृतमाश्रित्य ।)

न जानीषे मूर्ध्नश्च्युतमपि शिखण्डं यदखिलं
न कण्ठे यन्माल्यं कलयसि पुरस्तात्कृतमपि ।
तदुन्नीतं वृन्दावनकुहरलीलाकलभ हे
स्फुटं राधानेत्रभ्रमरवरवीर्योन्नतिरियम् ॥ २७ ॥

---

१ सत्यमेव भणसि, किं तु संचारिण्याश्चम्पकलतायाः ।
२ वयस्य, क्षणं विरमतु वक्रत्वम् । ऋजु कथय कथं शून्यहृदयोऽसीति ।
३ बालामिति भण ।

---

मेघश्रेणीस्निग्धे । हृदि वक्षसि । चपला विद्युत् । क्षणमात्रस्पर्शेऽप्यहं कृतार्थो भवामीति भावः ॥ संचारिण्याः संचारं कर्तुं शीलं यस्यास्तस्याः ॥ **शून्यहृदयोऽसीति ।** शून्यमना असीत्यर्थः ॥ कृष्णस्तु हृदयपदं वक्षःस्थलपरमित्यभिप्रेत्याह—**मालामिति ॥ नेत्यादि ।** भ्रमरो हि दानगन्धलोलुपो गण्डे वसन्

**कृष्णः**—(स्वगतम् ।) कथं निखिलमेव तर्कितं धूर्तेन । तदलं प्रतार्य । (प्रकाशम् ।) सखे, यथार्थमात्थ । तदाकर्ण्यताम् ।

मम राधा निसर्गस्थं प्रतीपमनयन्मनः ।
महाज्यैष्ठीव सहसा प्रवाहं सौरसैन्धवम् ॥ २८ ॥

**मधुमङ्गलः**—णूणं अच्छीणं दे पच्चक्खीभूदा एसा ।

**कृष्णः**—अथ किम् । सुबलतः सा परिचिक्ये च । (इत्यौत्सुक्यमभिनीय ।)

भ्रमद्भ्रूवल्लीकैः प्रतिदिशमपाङ्गस्य वलनैः
कुरङ्गीभ्यो भङ्गीभरमुपदिशन्तीमिव दृशोः ।
ततस्तां बिम्बौष्ठीं कलयति मयि क्रोधविकटो
मनोजन्मा पौष्पं धनुरनुपमं सज्जमकरोत् ॥ २९ ॥

**मधुमङ्गलः**—अविणाम संवुत्तं अण्णोण्णदंसणम् ।

**कृष्णः**—नहि नहि ।

तस्याः सखे मुखतुषारमयूखबिम्बे
दूरान्ममाक्षिपदवीमधिरूढमात्रे ।

---

१ नूनमक्ष्णोस्ते प्रत्यक्षीभूतैषा ।
२ अपिनाम संवृत्तमन्योन्यदर्शनम् ।

---

हस्तिनमुद्वेजयतीति लोकप्रसिद्धिः ॥ **अलं प्रतार्येति** । 'अलंखल्वोः प्रतिषेधयोः प्राचाम्' इति क्त्वाप्रत्ययः । प्रतारणं न कर्तव्यमित्यर्थः । **ममेत्यादि** । निसर्गस्थं स्वभावस्थं मनः प्रतीपं अस्वस्थं अनयत् । अकरोदित्यर्थः । सुरसिन्धुर्गङ्गा । 'सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । तस्याः प्रवाहं महाज्यैष्ठी यथा प्रतीपं नयति । अन्यपूर्णिमाभ्योऽपि तद्दिने समुद्रस्य क्षोभोद्रेकेणोद्वेल्लत्वे तरङ्गावघातिताया गङ्गायाः स्रोतः परावर्तते ॥ (उन्नीतं विचारितम् ॥) अथ किम् । त्वदुक्तं भूतमेवेत्यर्थः । **भ्रमदित्यादि** । प्रतिदिशं भ्रमद्भ्रूवल्लीकैः अपाङ्गस्य वलनैः करणैः दृशोर्भङ्गीभरं कुरङ्गीभ्य उपदिशन्तीं उपदेशं कुर्वन्तीं ताम् ॥ अपिनामेति प्रश्नः ॥ **तस्या**

निर्बन्धतः शपथकोटिभिरम्बयाहं
नीतः क्षणादहह सद्मनि भोजनाय ॥ ३० ॥

**मधुमङ्गलः**—[1]वअस्स, चिट्ठन्ति बहुलाओ बल्लवसुन्दरीओ, तदवि कीस तुमं एकाए राहीए णिब्भरं अणुरज्जसि ।

**कृष्णः**—सखे, राधायामसाधारणी कापि माधुरी । तथा हि ।

तस्याः कान्तिद्युतिनि वदने मञ्जुले चाक्षियुग्मे
तत्रास्माकं यदवधि सखे दृष्टिरेषा निविष्टा ।
सत्यं ब्रूमस्तदवधि भवेदिन्दुमिन्दीवरं वा
स्मारं स्मारं मुखकुटिलताकारिणीयं हृणीया ॥ २१ ॥

**मधुमङ्गलः**—[2]दंसणदो पढमं ज्जेव तत्थ तुज्झ राओ मए तक्किदो त्थि । ता किं त्ति लावण्णोवाहिओ त्ति भणासि ।

**कृष्णः**—सखे, सत्यमात्थ । स्वचित्ताभिनिवेशादेव तस्यां कोऽपि महिमोल्लाहः प्रतीयते । तथा हि ।

यत्र प्रकृत्या रतिरुत्तमानां तत्रानुमेयः परमोऽनुभावः ।
नैसर्गिकी कृष्णमृगानुवृत्तिर्देशस्य हि ज्ञापयति प्रशस्तिम् ॥ ३२ ॥

---

१ वयस्य, तिष्ठन्ति बहुला बल्लवसुन्दर्यः, तदपि कस्मात्त्वमेकस्यां राधायां निर्भरमनुरज्यसि ।

२ दर्शनतः प्रथममेव तत्र तव रागो मया तर्कितोऽस्ति । तत्किमिति लावण्योपाधिक इति भणसि ।

---

**इति** । निर्बन्धतोऽन्नादिकं शीतलीभवति, अतोऽवश्यमेवागन्तव्यमिति हठेन ॥ **तस्या इति** । कमनीया द्युतिर्यस्य तथाभूते वदने वदनसादृश्यार्थमिन्दुं स्मृत्वा नेत्रसादृश्यार्थमिन्दीवरं च स्मृत्वा हृणीया घृणा लज्जा वा मुखकुटिलताकारिणी भवेत् ॥ **यत्रेति** । प्रकृत्या स्वभावेनैव, नतु गुणाद्युपाधिभिः । उत्तमानामेव, न त्वधुरप्रकृतीनाम् । कृष्णमृगस्य अनुवृत्तिः संचारः नैसर्गिकी, न तु केनापि बला-

(नेपथ्ये।)

सहि सारिए, दिट्ठो तुए एत्थ बल्लविन्दणन्दणो।

**कृष्णः**—सखे, नेदीयानयं सुकुमारीकण्ठध्वनिरुद्धवति। तदत्र तूष्णीमास्वहे।

(ततः प्रविशतो ललिताविशाखे।)

**ललिता**—पेक्ख एसो दिट्ठिआ पुरदो कण्हो। ता उपसप्पम्ह। (इत्युभे तथा कृत्वा।) जअदु जअदु गोउलाणन्दो।

**कृष्णः**—सखि ललिते, शङ्के मनोहारिकुसुमपत्रमादातुमद्य वृन्दाटवीमध्येऽवतीर्णासि।

**ललिता**—विण्णादं वि णूणं आआरेण संगोवेसि जं दादुंति ण भणासि। ता गेण्ह णं कण्णिआरकोरअपत्तम्। (इत्यनङ्गलेखं कृष्णकरेऽर्पयति।)

**कृष्णः**—(स्वगतम्।) चेतः, समाश्वसिहि समाश्वसिहि। त्वदभीष्टबीजस्याङ्कुरोऽयमिति शङ्के।

**मधुमङ्गलः**—भोदि ललिदे, किं इमिणा अक्खराणां पत्तेण। सक्कराणां पत्तं समप्पेहि।

---

१ सखि सारिके, दृष्टस्त्वयात्र बल्लवेन्द्रनन्दनः।

२ पश्यैष दिष्ट्या पुरतः कृष्णः। तदुपसर्पावः। जयतु जयतु गोकुलानन्दः।

३ विज्ञातमपि नूनमाकारेण संगोपयसि यद्दातुमिति न भणसि। तद्गृहाणैतत्कर्णिकारकोरकपत्रम्।

४ भवति ललिते, किमेतेनाक्षराणां पत्रेण। शर्कराणां पत्रं समर्पय।

---

त्कारिता॥ **आकारेणेति**। दातुमिति पदस्य पूर्वं 'आ' इत्युपसर्गस्याधिकप्रयोगेण संगोपयसीत्यर्थः। अथवा आकारेण इङ्गितेन। वाक्चातुर्येणेत्यर्थः। 'आका-

**कृष्णः**—सखे, वाचय पत्रम्। कदाचिदेतन्नः कर्णरसायनस्य पात्रीभवति।

**मधुमङ्गलः**—[1]भो वअस्स, दिट्ठा तुम्ह गोआलजादीए वदाण्णदा। णं अम्ह अम्हणजादिं जेव्व गौरएण वन्दामि, जं तहिं दिअहे जण्णिअबम्हणीहिं चउविहेण अण्णेण भोइद म्ह। (इति लेखं वाचयति।)

घरिअ पडिच्छन्दगुणं सुन्दर मम मन्दिरे तुमं वससि।
तह तह रुन्धसि वलिअं जह जह चइदा पलाएमि॥ २२॥

**कृष्णः**—सखे, दुरधिगमार्था तावदियं गाथा। तेन पुनर्भण्यताम्।

(मधुमङ्गलस्तथा करोति।)

**कृष्णः**—(सानन्दं स्वगतम्।) कुलस्त्रियो हि धर्मभीरवो भवन्ति। तदुपेक्षया भावनिष्ठां निष्टङ्कयामि। (इति संरम्भमभिनीय प्रकाशम्।) हंहो, पश्यत पश्यत।

स्निग्धैरेभिः सखिभिरखिलैर्धेनुवृन्दानुसारी
नारीवार्ताविमुखहृदयः काननान्ते चरामि।

---

१ भो वयस्य, दृष्टा युष्मद्गोपालजातेर्वदान्यता। नन्वस्मद्ब्राह्मणजातिमेव गौरवेण वन्दे, यत्तस्मिन्दिवसे याज्ञिकब्राह्मणीभिश्चतुर्विधेनान्नेन भोजिताः स्मः।
धृत्वा प्रतिच्छन्दगुणं सुन्दर मम मन्दिरे त्वं वससि।
तथा तथा रुणत्सि वलितं यथा यथा चकिता पलाये॥

---

रस्त्विङ्ग इङ्गितम्' इत्यमरः। उभावप्यर्थौ प्राकरणिकौ॥ **भवतीति**। तथा च एतत्पत्रेणास्माकं किं प्रयोजनम्। भोजनोपयोगि खण्डनिर्मितदीर्घाकारमिष्टान्नरूपं पत्रं देहीत्यर्थः॥ **धृत्वेति**। प्रतिच्छन्दं चित्रपटम्। वलितं वल्युक्तं यथा स्यात्तथा रुणत्सीत्यर्थः॥ **पुनर्भण्यतामिति**। तस्य वाग्माधुर्यस्यातृप्त्या पुनरास्वादनार्थम्। प्रकटं त्वौदासीन्यव्यञ्जनार्थम्। ममात्र झटित्यनुसंधानमपि न भवतीति ज्ञापयितुम्॥ **धर्मभीरवो भवन्तीति**। अतोऽधर्मभयजन्योपेक्षया

मा स्वैरिण्यस्तदपि यदिमा दूषयन्ति प्रकामं
तद्विज्ञप्तिं द्रुतमिह जरद्गोपगोष्ठ्यां करिष्ये ॥ ३४ ॥

(इति कृत्रिमामर्षेण द्रुतं परिक्रामति ।)

**मधुमङ्गलः**—(स्मितमावृत्य ।) [1]भो बम्हआरिसिहामणे, क्खणं णिवट्टिअ इमाओ दुम्मुहगोइआओ पच्चुत्तरेण णिज्जिणिअ विद्दावेहि । अहं क्खु एदं सवं धिट्ठाणं वुत्तन्तं गोउलेसरीए विण्णविस्सम् । (इति पाणौ धृत्वा व्यावर्तयति ।)

(इति परस्परमवेक्ष्य वैलक्ष्यं नाटयतः ।)

**कृष्णः**—सखि विशाखे, चातुरक्षिकं प्रेक्षणमपि नास्ति । कुतस्तावत्परितो रोधनम् । तदनुयामि । केनाप्यपरेण नागरेण तस्याः स्वान्तमुच्चालितम् ।

**विशाखा**—(संस्कृतमाश्रित्य ।)

कस्तादृग्व्रजमण्डलेऽथ वलते शक्यो गरीयानसौ
येनोच्चालयितुं बलात्कुलवतीचेतोगिरिग्रामणीः ।
इत्यस्माभिरवक्रविक्रमलवादुत्क्षिप्तगोवर्धनो
हेतुस्त्वं किल पङ्कजाक्ष यदुभिस्तत्रासि निश्शङ्कितः ॥ ३५ ॥

**मधुमङ्गलः**—[2]अइ वाआलिए, चिट्ठ चिट्ठ । दिट्ठो मए उक्खि-

---

१ भो ब्रह्मचारिशिखामणे, क्षणं निवर्त्य इमा दुर्मुखगोपिकाः प्रत्युत्तरेण निर्जित्य विद्रावय । अहं खल्विदं सर्वं धृष्टानां वृत्तान्तं गोकुलेश्वर्यै विज्ञापयिष्यामि ।

२ अयि वाचालिके, तिष्ठ तिष्ठ । दृष्टो मया उत्क्षिप्तदण्डमण्डलैर्गोपैर्गोवर्धनो धृतः । त्वं कस्मादेकमेव प्रियवयस्यं संभावयसि ।

---

भावस्य निष्ठां निर्धारयामीत्यर्थः ॥ वैलक्ष्यं विस्मयम् ॥ सखीति । चातुरक्षिकं द्वयोर्द्वयोरक्ष्णोर्भवं चातुरक्षिकम् । अध्यात्मादित्वाट्ठक् ॥ कस्तादृगिति । चेत

सदण्डमण्डलेहिं गोवेहिं गोवद्धणो धरिदो। तुमं कीस एकं ज्जेव पिअवअस्सं संभावेसि।

कृष्णः—ललिते, अलमतिप्रसङ्गेन। तन्निवर्तस्व।

ललिता—सुंन्दर, सबगोउलसुहकारिणो वि तुअत्तो कधं सा एका ज्जेव्व दुक्खं अरिहदि वरिअसि।

कृष्णः—

सङ्गी मे मधुमङ्गलो न सहते धर्माध्वनो विच्युतिं
श्रीदामा परिमार्गयन्मम नहि च्छिद्राणि निद्रायति।
कंसः शास्ति खलः क्षितिं कथमतो मुग्धे विधेयं मया
निःशङ्कं कुलसुन्दरीपरिभवज्वालमहासाहसम्॥ ३६॥

ललिता—(सामर्षम्। संस्कृतेन।)

अन्तःक्लेशकलङ्किताः किल वयं यामोऽद्य याम्यां पुरीं
नायं वञ्चनसंचयप्रणयिनं हासं तथाप्युज्झति।
अस्मिन्संपुटिते गभीरकपटैराभीरपल्लीविटे
हा मेधाविनि राधिके तव कथं प्रेमा गरीयानभूत्॥ ३७॥

(इति रोदिति।)

---

१ सुन्दर, सर्वगोकुलसुखकारिणोऽपि त्वत्तः कथं सा एकैव दुःखमर्हति वरीयसि।

---

एव गिरिग्रामणीः गिरिश्रेष्ठः। अवक्रो दुर्बोधो यो विक्रमस्तस्य लवात्॥ वरीयसि(?)॥ निद्रायति। 'द्रै स्वप्ने'॥ अन्तःक्लेशेति। अन्तःक्लेशेन कलङ्किताश्चिह्निताः सख्यः। मृत्योरनन्तरमप्ययं क्लेशः स्थास्यत्येवेति भावः। वञ्चनसमूहस्य प्रणयिनं करणशीलं हासम्। तथापीत्यकारुण्यं व्यज्यते। अन्यासां प्रेमा भवतु कामान्धीकृतधियां, मेधाविन्यास्तव तु न युज्यते इति भावः। गभीरकपटैः संपुटिते

**मधुमङ्गलः**—अइ मुद्धे, सअलसत्थविसारओ जस्स अम्हारिसो अमच्चो होइ सोवि किं एदं धम्मं अदिक्कमिस्सइ । ता अलं वणरुदिदेण ।

**विशाखा**—(स्वगतम् ।) [2]णं राहीए गुञ्जाअलिअं कण्हस्स देन्ती हं इङ्गिदं लक्खेमि । (प्रकाशम् । संस्कृतेन ।)

उदीर्णरागेण करम्बितान्तरा परिस्फुरत्कृष्णमुखी गुणान्विता ।
गुञ्जावली मञ्जुतरावलम्बतां साराधिकेयं तव कण्ठसंगमम् ॥ ३८ ॥
(इति कण्ठे स्वयमर्पयति ।)

**कृष्णः**—(स्मित्वा सकपटेर्ष्यम् ।)

रागिणमपि सुकठोरं सुवृत्तमपि मुहुरुदीर्णमालिन्यम् ।
युवतीनामिव भावं नहि गुञ्जाहारमिच्छामि ॥ ३९ ॥
(इत्यजानन्निव कण्ठादवतार्य रङ्गणमालिकामर्पयति ।)

**विशाखा**—(स्वगतम् ।) [3]इमस्स भमो वि अम्हाणं मङ्गलो संवुत्तो । (इति वक्षेण संवृणोति ।)

---

१ अयि मुग्धे, सकलशास्त्रविशारदो यस्यास्मादृशोऽमात्यो भवति सोऽपि किमिमं धर्ममतिक्रमिष्यति । तदलं वनरुदितेन ।

२ नूनं राधाया गुञ्जावलीं कृष्णाय ददती अहमिङ्गितं लक्षयामि ।

३ एतस्य भ्रमोऽप्यस्माकं मङ्गलः संवृत्तः ।

---

व्याप्ते आभीरपल्लीनां व्रजनागरीणां विटे कामुके ॥ **उदीर्णेति** । सारेण अधिका इयं मञ्जुलतरा गुञ्जावली तव कण्ठसंगमं अवलम्बताम् । पक्षे सा प्रसिद्धा राधिका गुञ्जावलीव मञ्जुलतरा सत्यवलम्बताम् । उदीर्णं उद्गतो रागः रक्तिमा प्रेम च तेन करम्बितं व्याप्तं अन्तरं बहिः, पक्षे अन्तःकरणं च यस्याः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥' इत्यमरः । परितः स्फुरन् कृष्णः कृष्णवर्णः, पक्षे कृष्णेति नाम च मुखे यस्याः ॥ **रागिणमिति** । दृष्टान्तपक्षे बहिः प्रकाशाभावेन ज्ञातुमशक्यम् । सुवृत्तं वर्तु-

**ललिता**—हला, गोविआकोडिभुअङ्गस्स इमस्स अक्खलिदं अच्चरिअं बम्हचरिअं दिट्ठिआ पअडीभूदम्। ता अम्हेवि गदुअ तं अत्थाणाणुराइर्णीं राहिअं णिवट्टावेम्ह।

**विशाखा**—[2]सहि, जुत्तं मन्तेसि।

(इत्युभे परिक्रामतः।)

**ललिता**—[3]विशाहे, तुमं गदुअ इमाए रङ्गणमालिआए पिअसहीं आसासेहि। अहं क्खु एदं वुत्तन्तं भअवदीए विणिवेदिस्सम्।

(इति निष्क्रान्ते।)

**मधुमङ्गलः**—[4]भो, आदरिज्जन्तं वि अप्पाणं कीस आदरावेसि। इदं क्खु पच्चादावपव्वदाहिरोहणस्स अहिरोहिणीणिम्माणं दाव।

**कृष्णः**—सखे, सत्यं ब्रवीषि। साहसिक्यं हसितेनैवानुष्ठितम्।

**मधुमङ्गलः**—[5]पेक्ख गोईजुअलं णेत्तपहं अदिक्कमिदम्।

---

१ हला, गोपिकाकोटिभुजङ्गस्य एतस्य अस्खलितमाश्चर्यं ब्रह्मचर्यं दिष्ट्या प्रकटीभूतम्। तत् आवामपि गत्वा तामस्थानानुरागिर्णीं राधिकां निवर्तयावः।

२ सखि, युक्तं मन्त्रयसि।

३ विशाखे, त्वं गत्वा एतया रङ्गणमालिकया प्रियसखीमाश्वसिहि। अहं खल्विदं वृत्तान्तं भगवत्यै विनिवेदिष्यामि।

४ भोः, आद्रियमाणमप्यात्मानं किमित्यादरयसि। इदं खलु पश्चात्ताप-पर्वताधिरोहणस्याधिरोहिणीनिर्माणं तावत्।

५ पश्य गोपीयुगलं नेत्रपथमतिक्रान्तम्।

---

लकारम्, पक्षे सुचरित्रमपि मालिन्यं वक्रिमा॥ **सखीति**। अयं भावः—यद्य-स्यान्तरो रागो वर्तते तदा राधिकां निवर्तयाव इत्युक्त्वा आवयोर्गमने सत्येतस्य वैकल्यं भविष्यति ततश्चावां परावर्तयिष्यते किं वा स्वयमेव तस्याः प्राप्त्युपायमनु-सरिष्यति॥ **भो इत्यादि**। 'निःश्रेणिस्त्वधिरोहणी' इत्यमरः। 'सिडी' इति ख्यातम्॥ साहसिक्यं सहसा प्रवर्तनम्॥ **पश्येति**। तत्परावर्तनार्थं मां प्रति न

कृष्णः—(सानुतापम्।)

श्रुत्वा निष्ठुरतां ममेन्दुवदना प्रेमाङ्कुरं भिन्दती
स्वान्ते शान्तिधुरां विधाय विधुरे प्रायः पराञ्चिष्यति।
किं वा पामरकामकार्मुकपरित्रस्ता विमोक्ष्यत्यसू-
न्हा मौग्ध्यात्फलिनी मनोरथलता मृद्वी मयोन्मूलिता॥ ४०॥

मधुमङ्गलः—दाणिं[1] किं एत्थ सरणम्।

कृष्णः—सखे, प्रत्यनङ्गलेखं विना नान्यत्पश्यामि शरणम्।

मधुमङ्गलः—किं[2] एत्थ लेहसाहणम्।

कृष्णः—वशीकारक्रियाप्रशस्तो रागवान् जवानिर्यासः।

मधुमङ्गलः—एहि[3]। उड्डुमहाडइमण्डिदं णादिदूरे पक्कन्दणतीत्थं गच्छेम्ह।

(इति निष्क्रान्तौ।)

(ततः प्रविशति विशाखया प्रबोध्यमाना राधा।)

राधा—(सखेदम्। संस्कृतेन।)

यस्योत्सङ्गसुखाशया शिथिलिता गुर्वी गुरुभ्यस्त्रपा
प्राणेभ्योऽपि सुहृत्तमाः सखि तथा यूयं परिक्लेशिताः।

---

१ इदानीं किमत्र शरणम्।
२ किमत्र लेखसाधनम्।
३ एहि। उदुमहाटवीमण्डितं नातिदूरे प्रस्कन्दनतीर्थं गच्छावः।

---

वक्तव्यमिति भावः॥ **श्रुत्वेति**। विधुरे दुःखिते स्वान्ते शान्तिधुरां विधाय। मृद्वी जाताङ्कुरत्वात् कोमला॥ **एहीति**। प्रस्कन्दनतीर्थं मदनमोहनस्य निकटे ज्ञेयम्॥ **ततः प्रविशतीति**। अत्र संगत्यर्थं कथा रचनीया। विशाखा राधा-निकटं आगत्य श्रीकृष्णमुखान्निर्गतमुपेक्षाबोधकवाक्यमश्रावयित्वा, अपि तु स्वेन कल्पितं तदनुरागबोधकवाक्यं श्रावयित्वा, निर्माल्यमाल्यं च दर्शयित्वा, आनन्द-

धर्मः सोऽपि महान्मया न गणितः साध्वीभिरध्यासितो
धिग्धैर्यं तदुपेक्षितापि यदहं जीवामि पापीयसी ॥ ४१ ॥

**विशाखा**—(ससंभ्रमम् ।) सहि, समास्सस समास्सस । (इति रङ्गणमालां घ्राणेऽर्पयति ।)

**राधिका**—(संज्ञां लब्ध्वा ।) हला, किं एदं अच्चरिअं जं संमोहणं वि पवोहेदि ।

**विशाखा**—(माल्यं निवेद्य । संस्कृतेन ।)

अङ्गोत्तीर्णविलेपनं सखि समाकृष्टिक्रियायां मणि-
र्मन्त्रो हन्त मुहुर्वशीकृतिविधौ नामास्य वंशीपतेः ।
निर्माल्यस्रगियं महौषधिरिह स्वान्तस्य संमोहने
नासां कस्तिसृणां गृणाति परमाचिन्त्यां प्रभावावलीम् ॥४२॥

**राधिका**—(स्वगतम् ।) एव्वंगुणेण इमिणा उवेक्खिदं वि णं हदसरीरं कधं अज्जवि णिलज्जाहं धारेमि । ता कालिअहदपवेसोवाअं अणुसरिस्सम् । (प्रकाशम् ।) विसाहे, विण्णवेहि गुरुअणं जं बारहाइच्चतित्थं गदुअ सूरं अच्चिदुकामम्हि ।

---

१ सखि, समाश्वसिहि समाश्वसिहि ।

२ हला, किमिदमाश्चर्यं यत्संमोहनमपि प्रबोधयति ।

३ एवंगुणेनानेनोपेक्षितमपि इदं हतशरीरं कथमद्यापि निर्लज्जाहं धारयामि । तत्कालियह्रदप्रवेशोपायमनुसरिष्यामि । विशाखे, विज्ञापय गुरुजनं यद्वादशादित्यतीर्थं गत्वा सूर्यमर्चयितुकामास्मि ।

---

मूर्च्छां प्राप्यामास । क्षणानन्तरं विशाखाया मुखस्याप्रसन्नतां दृष्ट्वा कृष्णस्योपेक्षैव निर्धारिता । एवं तदङ्गसंबन्धि माल्यं च केनचिन्मिषेणानीतमिति निश्चितम् । अतः सखेदमाह—**संस्कृतेनेति** ॥ **हलेति** । यन्माल्यं पूर्वक्षणे मोहजनकमपि अधुना प्रबोधयति ॥ **अङ्गोत्तीर्णेति** । आसां मणिमन्त्रमहौषधीनां कः परमा-

**विशाखा**—[1]साहु सुमराइदं पिअसहीए जं अज्जाए जडिलाए वि इदं ज्जेव्व दाणिं आदिट्ठम्हि । ता एहि ।

(इत्युभे परिक्रामतः ।)

**राधिका**—(सव्यामोहम् ।)

[2]मं परिहरइ मुउन्दो तहवि दुरासा विरोहिणी डहई ।
मह सहि गहीरणीरा सरणं बहिणी किदन्तस्स ॥ ४२ ॥

**विशाखा**—[3]हला, पेक्ख पत्थाणे मङ्गलसूअणाइं सउणाइं । ता एवं मा भण ।

**राधिका**—(पुरो दृष्ट्वा ।) [4]हला, कथमेसा पुव्वदिसामुहे आआलिआ संझा दीसइ ।

**विशाखा**—[5]णो क्खु संझा । पेक्ख पक्कन्दणे सूरस्स वल्लहा परिफुल्लिदा उड्डराइ रेहदि । ता इमस्स अग्घं कादुं णं अवचिणम्ह ।

(इत्युभे तथा कुरुतः ।)

(ततः प्रविशति बटुना सह कृष्णः ।)

**कृष्णः**—सखे, सेयं राधाधरकान्तितस्करी जवाराजिः ।

**मधुमङ्गलः**—[6]अदो णं णिप्पीडिअ णिम्माहि पच्चणङ्गलेहम् ।

---

१ साधु स्मारितं प्रियसख्या यदार्यया जटिलयापि इदमेवेदानीमादिष्टास्मि । तदेहि ।

२ मां परिहरति मुकुन्दस्तदपि दुराशा विरोधिनी दहति ।
मम सखि गभीरनीरा शरणं भगिनी कृतान्तस्य ॥

३ हला, पश्य प्रस्थाने मङ्गलसूचनानि शकुनानि । तदेवं मा भण ।

४ हला, कथमेषा पूर्वदिशामुखे आकालिकी संध्या दृश्यते ।

५ न खलु संध्या । पश्य प्रस्कन्दतीर्थे सूर्यस्य वल्लभा प्रफुल्लिता उड्डराजी राजति । तदस्या अर्घ्यं कर्तुमेतदवचिन्वः ।

६ अत एतन्निष्पीड्य निर्माहि प्रत्यनङ्गलेखम् ।

**कृष्णः**—(परिक्रम्य सविस्मयम् ।)

एषा नान्तिकवर्तिनी सुरगिरेरैलावृती हन्त भू-
रग्रे किं कलयामि काञ्चनरुचामुद्गारगौरीर्दिशः ।
आं ज्ञातं मणिनूपुरध्वनिभरादालीजनालंकृता
कान्तीनां कुलदेवता विलसितुं वृन्दाटवीं विन्दति ॥ ४४ ॥

**मधुमङ्गलः**—हन्त भो, मग्गिज्जन्तम्मि वाउरासाहणे कुरङ्गी सअं हत्थं गदा ।

**कृष्णः**—(सानन्दम् ।) सखे, साधु विज्ञातम् । तदत्र वृक्षान्तरितौ शृणुवः किमसौ प्रस्तौति ।

(इति तथा स्थितौ ।)

**राधिका**—(विशाखामालम्ब्य सास्रम् ।) हला, एसो जणो कथापसङ्गे सअं सुमरिदव्वो ।

**विशाखा**—(सबाष्पम् ।) सहि, अच्छीणधीरत्तणादिगुणा भणिज्जसि । ता किंति एव्वं उव्विग्गासि ।

**राधिका**—सहि, णिग्गुणीकिदम्हि तेण धुत्तेण । (इति संस्कृतेन ।)

तस्योरस्तटमण्डलं धृतिनदीरोधक्रियापण्डितं
वक्रेन्दुः कुलधर्मपङ्कजवनीसंकोचदीक्षाव्रती ।

---

१ हन्त भोः, मृग्यमाणे वागुरासाधने कुरङ्गी स्वयं हस्तं गता ।
२ हला, एष जनः कथाप्रसङ्गे स्वयं स्मारितव्यः ।
३ सखि, अक्षीणधीरत्वादिगुणा भण्यसे । तत्किमित्येवमुद्विग्नासि ।
४ सखि, निर्गुणीकृतास्मि तेन धूर्तेन ।

---

चिन्त्यां प्रभावावलीं न गृणाति । अपि तु सर्व एव ॥ **एषेति** । सुरगिरेः सुमेरोः ऐलावृती इलावृतसंबन्धिनी भूरेषा हन्त निश्चितं न भवति । तत्किं काञ्चनकान्तीनामुद्गारेण गौरीः पीतवर्णा दिशः कस्मात्पश्यामि । निश्चित्याह—नेयं स्थावरभूमिः, अपि तु मणिनूपुरध्वनिभराद्धेतोः । आं ज्ञातमिति ॥ 'वागुरा मृगबन्धिनी' इत्यमरः ॥ **सहीति** । जनैरिति शेषः । **तस्योर इति** । धृतिनद्या वेगनिवृत्तिरूप-

दोर्यूपौ नितरामुदञ्चितचिरव्रीडाभिचाराध्वरौ
हा कष्टं निखिलंगिला सखि दृशोर्भङ्गीभुजङ्गी तु सा ॥ ४५ ॥

**कृष्णः**—प्रिये, त्वन्माधुर्येण माधवश्च जडीकृत्य निर्गुणामवस्थां नीतोऽयम् ।

**राधिका**—(आकाशे अञ्जलिं बद्ध्वा । संस्कृतेन ।) हन्त भो बकीहन्तः,

गृहान्तः खेलन्त्यो निजसहजबाल्यस्य वलना-
दभद्रं भद्रं वा किमपि नहि जानीमहि मनाक् ।
वयं नेतुं युक्ताः कथमशरणां कामपि दशां
कथं वा न्याय्या ते प्रथयितुमुदासीनपदवीम् ॥ ४६ ॥

**कृष्णः**—प्रिये, कः खलु जिजीविषुर्जीवातुभूतायां सिद्धौषधिलतायामुदास्ते ।

**राधिका**—(निःश्वस्य ।) हला, एसा पिआ मे एकाअली तुए अप्पणो कण्ठे धारणिज्जा । (इति कण्ठादेकावलीमुत्तारयति ।)

**विशाखा**—(हठान्निवार्य ।) हला, एव्वं अणुचिट्ठन्ती किंति मं डहसि जं ललिदं पडिक्खिअ णिरुज्जमम्हि । (इति रोदिति ।)

---

१ सखि, एषा प्रिया मे एकावली त्वया आत्मनः कण्ठे धारणीया ।
२ हला, एवमनुतिष्ठन्ती किमिति मां दहसि यल्ललितां प्रतीक्ष्य निरुद्यमास्मि ।

---

रोधक्रियायां पण्डितम् । तथा च धैर्यस्य वेगनिवृत्तौ फलतोऽधैर्यमेवायातीति भावः । कुलधर्मरूपपद्मवनीसंकोचनदीक्षायां व्रती । यूपः यज्ञाय पशुबन्धस्तम्भविशेषः । उदञ्चित उद्गतः चिरं व्रीडाया अभिचारविषये अध्वरो याभ्याम् । शत्रुवधोद्देश्यकयागोऽभिचारयागः । दृशोर्भङ्गीभुजङ्गी तु निखिलंगिला निखिलं गिलन्ती ॥ कृष्णः मधुमङ्गलं श्रावयित्वा नीचैराह—**प्रिये इति** ॥ **हन्तेति** । भो बकीहन्तः पूतनाघातिन्, बाल्यमारभ्यैव तव स्त्रीवधेऽभ्यासो वर्तत एवेत्यर्थः ॥ **गृहान्तरिति** । वलनाद्बलवत्त्वात् । यदि चाशरणामेतां दशां नीता वयम् ।

**राधिका**—(संस्कृतेन।)

अकारुण्यः कृष्णो यदि मयि तवागः कथमिदं
मुधा मा रोदीर्मे कुरु परमिमामुत्तरकृतिम्।
तमालस्य स्कन्धे विनिहितभुजावल्लरिरियं
यथा वृन्दारण्ये चिरमविचला तिष्ठति तनुः॥ ४७॥

**कृष्णः**—(सास्रम्।) सखे, दृष्टानुरागस्य साधिष्ठता।

**राधिका**—(स्वगतम्।) [1]तुवरावेदि मं कावि घणुक्कण्ठा। (प्रकाशम्।) हला, सूरमच्चिअ किं पि अब्भत्थिदुकामाम्हि। ता जाव सिणाणं कदुअ णिवुत्ता भवे ताव तुमं एत्थ पुप्फं अवचिणेहि। (इति तीर्थाभिमुखं द्वित्राणि पदानि गत्वा पुनरात्मगतम्।) हन्त, सो तिल्लोकमोहणो मुहचन्दो पुणो मए ण दिट्ठो। (इति सोत्कण्ठं निवृत्य प्रकाशम्।) हला, पसीद पसीद। दंसेहि तं पडिच्छन्दअम्।

**विशाखा**—[2]सहि, णत्थि एत्थ चित्तफलअम्।

---

१ त्वरयति मां कापि घनोत्कण्ठा। हला, सूर्यमर्चयित्वा किमप्यभ्यर्थयितुकामास्मि। तद्यावत्स्नानं कृत्वा निवृत्ता भवेयं तावत्त्वमत्र पुष्पमवचिनु। हन्त, स त्रैलोक्यमोहनो मुखचन्द्रः पुनर्मया न दृष्टः। हला, प्रसीद प्रसीद। दर्शय एनं प्रतिच्छन्दम्।

२ सखि, नास्त्यत्र चित्रफलकम्।

---

अधुना उदासीनपदवीं प्रथयितुं प्रकटयितुं किं न्याय्या न्यायोचिता। तस्मादस्माकं यथार्थमेव तव व्यवसाय इति भावः॥ **अकारुण्य इति**। यदि कृष्णोऽकारुण्यः तव कथं मयि आगः अपराधः। तस्मान्मुधा व्यर्थं मा रोदीः। किं तु मे उत्तरकृतिं प्राणत्यागानन्तरं अन्त्येष्टिकर्म। सा तूत्तरकृतिर्नान्यजनस्येव करणीया। किं तु तमालस्येत्यादि। तमालस्य स्कन्धे विनिहिता भुजरूपलता यस्या एवंभूता मम तनुः यथा वृन्दारण्ये सदाऽविचला सती तिष्ठति तथा करणीया॥ **साधिष्ठतेति**।

**राधिका**—(सव्यथम् ।) [1]तदो पणिहाणेण णं पच्चक्खीकरिस्सम् । (इति ध्यानं नाटयति ।)

**कृष्णः**—सखे, पीतमपीतपूर्वमुन्मादकं श्रोत्रमाध्वीकम् । तदग्रतो गच्छावः ।

(इत्युभौ तथा कुरुतः ।)

**विशाखा**—(विलोक्य सानन्दं ससंभ्रमम् ।) [2]सहि, दिट्ठिआ तुज्झ सुहज्झाणेण फलिदम् । ता झत्ति उग्घाडेहि लोअणम् ।

(राधिका दृशं दरोन्मील्य चमत्कारं नाटयति ।)

**विशाखा**—(संस्कृतेन ।)

यदर्थं संकीर्णे पतसि हतकन्दर्पकदने
　मृदुं वा दुर्वारे ज्वलयसि तनुं प्रेमदहने ।
अखण्डेनापीडं सखि नवशिखण्डेन कलय-
　न्विलासी सोऽयं ते स्फुरति पुरतो जीवितपतिः ॥ ४८ ॥

**राधिका**—[3]अम्महे सिविणस्स माहुरी ।

**विशाखा**—[4]अविसद्धे, एसो दे अपुव्वो सिविणो जो णिद्दाए विणा वि णिप्पण्णो ।

---

१ ततः प्रणिधानेनैनं प्रत्यक्षीकरिष्यामि ।

२ सखि, दिष्ट्या तव सुखध्यानेन फलितम् । तज्झटिति उद्घाटय लोचनम् ।

३ अहो स्वप्नस्य माधुरी ।

४ अविश्रब्धे, एष तेऽपूर्वः स्वप्नो यो निद्रया विनापि निष्पन्नः ।

---

'अन्तिकबाढयोर्नेदसाधौ' इति बाढस्य साधादेशः । तथा चानुरागस्यातिशयत्वमित्यर्थः । यन्मृतेऽपि मत्सदृशवर्णे तमालवृक्षे संयोगवासनेत्यहो रागस्य पराकाष्ठेति भावः ॥ **यदर्थमिति** । संकीर्णे व्यापके । अखण्डेन नवशिखण्डेन ।

कृष्णः—

असौ दृग्भङ्गीभिः कुसुमशरमङ्गीकृतशरं
सृजन्ती दन्तीन्द्रक्रमणकमनीयालसगतिः ।
अदूरे रम्भोरूरिह वदनबिम्बस्य सुषमा
समारम्भादम्भोरुहमधुरिमाणं दमयति ॥ ४९ ॥

राधिका—(कृष्णे दृगन्तं नर्तयन्ती स्वगतम् ।) साहु रे हिअअ, साधु दिट्ठिआ मुहुत्तं विलम्बिदम् ।

कृष्णः—(स्मित्वा ।) धूर्ते विशाखिके, समन्तान्मृग्यमाणा दिष्ट्या त्वमत्र दृष्टासि । यदद्य भवत्या रूपसादृश्यादपाकिमगुञ्जाहारेण मां प्रतार्य दुर्लभा मे रङ्गणमालिकापनीता ।

मधुमङ्गलः—भो, णं राहीए कण्ठादो दीसन्तीं अप्पणो रङ्गणमालिअं सअं जेव्व आअडिअ गेण्ह ।

कृष्णः—सखे, जानतापि भवता किमिदमन्याय्यमुपन्यस्तम् । न खलु स्वप्नेऽपि मया कामिनीस्पर्शः स्मर्यते ।

राधिका—(स्वगतम् ।) ईमस्स परिहासो वि एसो संकिदाए मम सच्चो पडिभादि ।

विशाखा—(विहस्य ।) अयि वराङ्गणातरङ्गिणीणं महासाअर, चिट्ठ

१ साधु रे हृदय, साधु । दिष्ट्या मुहूर्तं विलम्बितम् ।

२ भो, एनां राधायाः कण्ठतो दृश्यमानामात्मनो रङ्गणमालिकां स्वयमेवाकृष्य गृहाण ।

३ एतस्य परिहासोऽप्येष शङ्किताया मम सत्यः प्रतिभाति ।

४ अयि वराङ्गनातरङ्गिणीनां महासागर, तिष्ठ तिष्ठ । इदानीमपीमानि दृश्यन्ते तव अङ्गेषु तासां चिह्नानि ।

आपीडं शिरोवतंसम् । कलयन् धारयन् ॥ असाविति । कुसुमशरं कन्दर्पम् । कथंभूतम् । अङ्गीकृतशरम् । हस्तिपादविक्षेपादपि कमनीया अलसा गतिर्यस्याः ॥ अपाकिमेति । गुञ्जाहारस्य निकृष्टत्वमानीतम् ॥ अयीति । इमानि चिह्नानि

चिट्ठ। दाणिं वि इमाइं दीसन्ति तुज्झ अङ्गेसु ताणं चिण्हाइं। (इति संस्कृतेन।)

आकृष्टानि कटाक्षभङ्गिभिरलं गोपाङ्गनानां त्वया
रक्तान्यत्र मनांसि यानि निमिषोन्मुक्तानि नेत्राण्यपि।
तान्येतानि भवान्नवाञ्जनतनो गुञ्जावलीनां छला-
त्पिच्छानां च सदा प्रसाधनधिया संधारयन्नन्दसि॥ ५०॥

**कृष्णः**—(सहर्षमात्मगतम्।)

प्रमदरसतरङ्गस्मेरगण्डस्थलायाः
स्मरधनुरनुबन्धिभ्रूलतालास्यभाजः।
मदकलचलभृङ्गीभ्रान्तिभङ्गीं दधानो
हृदयमिदमदाङ्क्षीत्पक्ष्मलाक्ष्याः कटाक्षः॥ ५१॥

(नेपथ्ये।)

णत्थि विसाहे।

**कृष्णः**—कथमकाण्डे जरापाण्डुरेयं जटिला।

(प्रविश्य।)

**जटिला**—(पुरो दृष्ट्वा स्वगतम्।) केहं एत्थ कण्हो। (प्रकाशम्।) विसाहे, किंति इमाइं धूअगन्धरत्तचन्दनाइं तुए विसुमरिदाइं।

---

१ नास्ति विशाखे।

२ कथमत्र कृष्णः। विशाखे, किमित्येतानि धूपगन्धरक्तचन्दनानि त्वया विस्मृतानि।

---

दृश्यन्ते इत्यन्वयः। **आकृष्टेत्यादि**। हे नवाञ्जनतनो, गुञ्जावलीनां छलाद्गोपाङ्गनानां रक्तानि मनांसि, एवं पिच्छानां छलाभिर्निमेषनेत्राणि स्वप्रसाधनमाभरणं स्वबुध्या धारयन्॥ **प्रमदेति**। मत्तचञ्चलभृङ्गीनां भ्रमो यतस्तादृशभङ्गीं दधानः कटाक्षः। प्रशस्तपक्ष्मयुक्ते अक्षिणी यस्याः॥ **कथमित्यादि**। जरया पाण्डुरा

**कृष्णः**—(स्वगतम् ।)

चन्द्रिकां चन्द्रलेखायाश्चकोरे पातुमुद्यते ।
पिधानं विदधे हन्त शरदम्भोधरावली ॥ ५२ ॥

(प्रकाशम् ।) मातुर्मातुलानि, प्रणमामि ।

**जटिला**—[1]मोहण, वल्लअकिशोरीउले अवङ्कदिट्ठी होहि ।

**मधुमङ्गलः**—(विहस्य ।) [2]भो दधीचिहड्डककसे, एसो सव्वदो उदारदिट्ठी च्चेअ मज्झ पिअवअस्सो । तुमं क्खु केअरच्छी । ता अप्पाणं आसंसेहि ।

**जटिला**—[3]भो किशोरीभुअङ्ग, कीस तुमं आअदोसि ।

**कृष्णः**—आर्ये, लोकोत्तरानुरागचमत्कारिणीयं सुजवालक्ष्मीः कं वा नाकर्षति ।

**जटिला**—(स्वगतम् ।) [4]णूँणं भअवदीए विज्जापहावसंभाविदा इमस्स एत्थ उवसत्ती । (प्रकाशम् ।) मोहण, झत्ति इदो गच्छेहि ।

---

१ मोहन, वल्लवकिशोरीकुले अवक्रदृष्टिर्भव ।

२ भो दधीच्यस्थिकर्कशे, एष सर्वदोदारदृष्टिरेव मम प्रियवयस्यः । त्वं खलु केकराक्षी । तदा आत्मानमाशिंषय ।

३ भो किशोरीभुजङ्ग, कस्मात्त्वमागतोऽसि ।

४ नूनं भगवत्या विद्याप्रभावसंभाविता अस्यात्रोपसत्तिः । मोहन, झटिति इतो गच्छ ।

---

श्वेतवर्णा ॥ **चन्द्रिकामिति** । जरापाण्डुरत्वाच्छरदम्भोधरस्थानीया जटिला ॥ **भो दधीचीति** । भो दधीच्यस्थिकर्कशे । वज्रादपि कठोरे इत्यर्थः । काकवद्वक्राक्षी त्वं आत्मानमेवाशीर्वादं कुरु । येन तव दृष्टेर्वक्रत्वं दूरीभवतीत्यर्थः ॥ **आर्ये इति** । सुष्ठुजवानां ओड्रपुष्पाणां लक्ष्मीः शोभा । पक्षे सुष्ठु जवो यशोव्यञ्जकचिह्नविशेषो यस्याः सा । इयं राधैव लक्ष्मीस्तत्तुल्यत्वात् । यद्वा शोभामयीत्वात् । कीदृशी । लोकोत्तरो योऽनुगतो रागो रक्तिमा तेन चमत्कारिणी । पक्षे स्पष्टम् ॥ **णूणमिति** । मुखराद्वारा भगवत्या यत्पूर्वमुक्तं मम विद्याप्रभावेण स्वतन्त्रकृष्णं

**कृष्णः**—अयि जल्पाकि वृद्धे, किमित्याकुलासि । स्वच्छन्दतो गच्छेयम् ।

**जटिला**—(कुटिलं विलोक्य । संस्कृतेन ।)

निर्धौतानां निखिलधरणीमाधुरीणां धुरीणा
　कल्याणी मे निवसति वधूः पश्य पार्श्वे नवोढा ।
अन्तर्गोष्ठे चटुल नटयन्नत्र नेत्रत्रिभागं
　निःशङ्कस्त्वं भ्रमसि भविता नाकुलत्वं कुतो मे ॥ ५३ ॥

**कृष्णः**—मृषाशङ्किनि वृद्धे, मा प्रलापं कृथाः । यावदेतां ते वधूमाकर्णयं तावन्मान्यां भावयामि ।

**जटिला**—विसाहे, किं ति एत्तिअ विलम्बिदासि ।

**विशाखा**—(स्मित्वा ।) अज्जे, णं दुल्ललिदं कुरङ्गं पेक्खन्ती विम्हिदम्हि । (इति सदृष्टिक्षेपम् ।)

　अकरुण मुक्किअ चङ्गं कुरङ्ग पेम्मेण संगदं हरिणीम् ।
　विहलं कूद्दणचडुलो तुमं बणादो बणं भमसि ॥ ५४ ॥

---

१ विशाखे, किमित्येतावद्विलम्बितासि ।
२ आर्ये, एतं दुर्ललितं कुरङ्गं पश्यन्ती विस्मितास्मि ।
　अकरुण त्यक्त्वा चङ्गं कुरङ्ग प्रेम्णा संगतां हरिणीम् ।
　विफलं कूर्दनचटुलस्त्वं वनाद्वनं भ्रमसि ॥

---

सुष्ठु तव वधूनिकटे प्रेषयिष्यामि, न तु नन्दपुत्रम्, तदेवाधुना कृतमित्यर्थः ॥ **अयीति** । जल्पाकि बहुभाषिणि ॥ **निर्धौतानामिति** । निर्धौतानां क्षालितानाम् । सारभूतामिति यावत् । यावदेतां तव वधूमिति श्रुतं तावन्मान्यां माननीयां भावयामि । न तु प्रकारान्तरम् । पक्षे मा अन्यां नान्यदीयाम् । स्वीयामित्यर्थः ॥ **अज्जे इति** । सापदेशं वचनं कृष्णं प्रति । कुरङ्गं हरिणम्, पक्षे कुत्सितं रङ्गं यस्य तम् ॥ **अकरुण इति** । चङ्गं मनोहरम् । 'त्वङ्गचङ्गौ मनोहरे' इति

जटिला—[1]अइ अत्थाणदुग्गहे, मुञ्च कुरङ्गकोदूहलम् ।

मधुमङ्गलः—[2]पिअवअस्स, पेक्ख । एसो सतिण्णो वि कीरजुआणो णं महुरं दाडिमीं ण पडिपज्जइ ।

कृष्णः—(स्मित्वा ।)

हृदि ताडितोऽपि दाडिमि सुमनोरागेण ते रुचिं वहता ।
पक्किमरसासि किं वा नेति शुकः शङ्कयोदास्ते ॥ ५५ ॥

(विशाखा सदम्भङ्गं राधिकामवलोकते ।)

राधिका—(स्वगतम् ।) [3]हिअअ, समस्सस समस्सस । (इति सखेदमपवार्य । संस्कृतेन ।)

पीतं न वागमृतमत्र हरेरशङ्कं
न्यस्तं मयास्य वदने न दृगञ्चलं च ।
रम्ये चिरादवसरे सखि लब्धमात्रे
हा दुर्विधिर्विरुरुधे जरतीच्छलेन ॥ ५६ ॥

जटिला—(स्वगतम् ।) [4]अम्हहे कण्हदिट्ठिणो माहप्पं, जं बहूए

---

१ अयि अस्थानदुर्ग्रहे, मुञ्च कुरङ्गकौतुकम् ।

२ प्रियवयस्य, पश्य । एष सतृष्णोऽपि कीरयुवा इमां मधुरां दाडिमीं न प्रतिपद्यते ।

३ हृदय, समाश्वसिहि समाश्वसिहि ।

४ अहो कृष्णदृष्टेर्माहात्म्यम्, यद्वध्वाः स उपसर्गस्तथा नास्ति ।

---

श्लेषः । **हृदीति** । हे दाडिमि, तव रुचिं कान्तिं वहता ते तव सुमनोरागेण पुष्पस्य रक्तिम्ना हृदि ताडितोऽपि यन्त्रितोऽपि शुकः किं पक्किमरसासि न वा इति शङ्कया उदास्ते । तेन सदा पुष्पिता त्वमासीस्तदापि शुकस्य त्वयि औदासीन्यं नासीत् किं पुनरिदानीं फलितायामिति भावः । पक्षे सुष्ठु मनसो रागेण परिपक्वप्रेममयशृङ्गाररसवती न वेति शङ्कया इत्यर्थः ॥ **सदम्भङ्गमिति** । राधे कृष्णाभिप्रायः कश्चिदवगम्यत इति ॥ **अपवार्येति** । जटिलां वञ्चयित्वा एकान्ते

सो उवसग्गो तह णत्थि । (प्रकाशम् ।) विसाहे, पेक्ख । अदिक्कमदि मज्झण्हो । ता तुरिदं सूरमण्डवं पविसम्ह ।

(इति तिस्रो निष्क्रान्ताः ।)

**कृष्णः**—सखे, कौमुदीयं पौर्णमासीमनुवर्तते । तदेहि । तामेव प्रतिपद्येवहि ।

(इति निष्क्रान्तौ ।)

इति मन्मथलेखो नाम द्वितीयोऽङ्कः ।

---

## तृतीयोऽङ्कः ।

(ततः प्रविशति ललितयानुगम्यमाना पौर्णमासी ।)

**पौर्णमासी**—वत्से, नूनं मच्चल्पमाणो नाभिनन्दति नन्दकुमारस्ते सखीसंगमम् ।

**ललिता**—भअवदि, दुव्वोहं क्खु लोओत्तराणां चित्तं ण झत्ति विअसदि ।

**पौर्णमासी**—(पुरोऽवलोक्य ।) वत्से, पश्य कदम्बवाटिकायां मधुमङ्गलेन सार्धं समङ्गलं वर्धते मधुमर्दनः । (पुनर्निरूप्य ।)

परामृष्टाङ्गुष्ठत्रयमसितरत्नैरुभयतो
　　वहन्ती संकीर्णौ मणिभिररुणैस्तत्परिसरौ ।

---

विशाखे, पश्य । अतिक्रमते मध्याह्नः । तत्त्वरितं सूर्यमण्डपं प्रविशामः ।

१ भगवति, दुर्बोधं खलु लोकोत्तराणां चित्तं न झटिति विकसति ।

---

इत्यर्थः ॥ सखे इति । इयं राधिकैव कौमुदी । तस्या एवाधीना राधेयमित्यर्थः ॥ इति विदग्धमाधवे द्वितीयोऽङ्कः ॥

समङ्गलमिति । समङ्गलं यथा स्यात्तथा मधुमङ्गलेन सह कृष्ण आनन्देन वर्धते । परामृष्टेति । उभयतः शिरसि पुच्छे च । अङ्गुष्ठत्रयपरिमितं प्रदेशं व्याप्य

तयोर्मध्ये हीरोज्ज्वलविमलजाम्बूनदमयी
करे कल्याणीयं विहरति हरेः केलिमुरली ॥ १ ॥
(ततः प्रविशति यथानिर्दिष्टः कृष्णः ।)

**कृष्णः**—(सानुतापम् ।)

त्रपया नितरां पराङ्मुखी सहसा स्मेरसखीधृताञ्चला ।
गमिताद्य हठेन राधिका न कथं हन्त मया भुजान्तरम् ॥ २ ॥

(निःश्वस्य ।) सखे मधुमङ्गल, खञ्जरीटदृशः सा विलासमञ्जरी चोरयति मे चित्तचञ्चरीकम् । (इत्यौत्सुक्यं नाटयन् ।)

छिन्नः प्रियो मणिसरः सखि मौक्तिकानि
वृत्तान्यहं विचिनुयामिति कैतवेन ।
मुग्धं विवृत्य मयि हन्त दृगन्तभङ्गीं
राधा गुरोरपि पुरः प्रणयाद्व्यतानीत् ॥ ३ ॥

**पौर्णमासी**—(दूरत एव कृष्णं निर्वर्ण्य । साशङ्कम् ।)

अक्ष्णोर्द्वन्द्वं प्रसरति दरोद्घूर्णतारं मुरारेः
श्वासाः क्रूरां किल विचकिलैर्मालिकां म्लापयन्ति ।

---

असितरत्नैः इन्द्रनीलमणिभिः परामृष्टा खचिता। तत्परिसरौ अरुणैर्मणिभिः संकीर्णौ। तथा च शिरोऽङ्गुष्ठवर्णनानन्तरमङ्गुष्ठत्रयं व्याप्य एवं पुच्छाङ्गुष्ठत्रयात्पूर्वमङ्गुष्ठत्रयं व्याप्य यौ द्वौ परिसरौ तौ व्याप्येत्यर्थः ॥ **तयोर्मध्य इति** । तथैव व्याख्येयम् । हीरैरुज्ज्वलं विमलं यज्जाम्बूनदं कनकं यन्मयी ॥ **त्रपयेति** । राधिकामाकृष्य तस्याः कण्ठात्स्वमाल्यं गृह्यतामिति मधुमङ्गलेन यदा उक्तम्, तदैव न कथं मया राधिका भुजान्तरं गमिता प्रापिता एवं मयि पृष्टम्, तन्निकटं गते सति सा सहसा त्रपया पराङ्मुखी अभविष्यत्, तदनन्तरं स्मेरा सखी तस्या अञ्चलं धृत्वा मम निकटं प्रापयिष्यत इति श्रीकृष्णस्य मनोनुतापः । खञ्जरीटदृशो राधाया विलासखञ्जनः । चित्तचञ्चरीकं चित्तभ्रमरम् ॥ **छिन्न इति** । मणिसरो हारः ॥ **अक्ष्णोरिति** । विचकिलैर्मल्लिकापुष्पैः । यया रमण्या अयं श्रीकृष्णोऽप्येतां ध्याननिष्ठां

केयं धन्या वसति रमणी गोकुले क्षिप्रमेतां
नीतस्तीव्रामयमपि यया कामपि ध्याननिष्ठाम् ॥ ४ ॥

अथवा कृतं संदेहेन । वत्साः, राधिकैव खल्वत्र कारणम् ।

**कृष्णः**—(पौर्णमासीं पश्यन्नुपसृत्य ।) भगवति, प्रणमामि ।

**पौर्णमासी**—नागर, गोपीस्तनतटीष्वलंपटीभव ।

**कृष्णः**—(किंचिद्विहस्य ।) कृतं पिष्टपेषिणीभिराशीर्भिर्यदहमेव गोपीति प्रसिद्धां श्यामां वल्लीमपि न पाणिपल्लवेन स्पृशामि ।

**मधुमङ्गलः**—(विहस्य ।) भोः, किं अम्हाणं सामए, गोरी ज्जेव मग्गिज्जइ ।

**पौर्णमासी**—(सनर्मस्मितम् ।)

गोपेश्वरस्य तनयोऽसि नयोपपन्नः
ख्यातस्तथा व्रजकुले भुजयोर्बलेन ।
लीलाशतैस्तदपि किं कुलयोषितस्त्व-
मुन्मादमुद्वहसि माधव राधिकायाः ॥ ५ ॥

**मधुमङ्गलः**—अइ विवरीदवादिणि वुड्ढिए, चिट्ठ चिट्ठ ।
तुज्झ राहिआए ज्जेव्व एसो अम्ह पिअवअस्सो उम्मादिओ ।
जं सेहरसिङ्गवेत्ताइ दाणिं कहिं विभट्ठाइं ति ण जाणादि ॥ ६ ॥

---

१ भोः, किमस्माकं श्यामया, गौर्येव मृग्यते ।

२ अयि विपरीतवादिनि वृद्धे, तिष्ठ तिष्ठ ।
तव राधिकयैव एषोऽस्मत्प्रियवयस्य उन्मादितः ।
यस्माच्छेखरशृङ्गवेत्राणीदानीं कस्मिन्विभ्रष्टानीति न जानाति ॥

---

नीतः । प्रधाने कर्मण्यभिधेये न्यादीनां हेतुद्विकर्मणामप्रधानकर्मणि कृष्णे प्रत्ययः ॥ **नागर इति** । अलम्पटो भव लम्पटो मा भूः, अलमतिशयेन पटीभव । पटायमानः सदा तिष्ठेत्यर्थः ॥ **किंचिदिति** । गूढार्थबोधव्यञ्जकं किंचिद्विहसनम् । प्रकटार्थमादाय प्रत्याह—कृतं पर्याप्तम् । अलमित्यर्थः । 'गोपी श्यामा

**कृष्णः**—(सलज्जम् ।) आर्ये, वाचाटोऽयं बटुर्मृषा जल्पति । किंतु निश्चितं ते व्याहरामि । न तासु मच्चित्तरागस्त्वद्गोपीषु । तदत्र तत्त्वतः पृच्छ्यतामयम् ।

**मधुमङ्गलः**—अज्जे, सच्चं सच्चम् । अम्हपिअवअस्सहिअअस्स अज्जवि राओ तुम्हगोइआणं अङ्गेसु ण मए दिट्ठोत्थि । पत्थुद ताणं अङ्गराओ ज्जेव्व इमस्स हिअये दीसइ ।

**कृष्णः**—(सप्रणयरोषम् ।) धिङ्मूर्ख, विश्रम्भादाहतोऽपि जिम्हतां न जहासि ।

**पौर्णमासी**—सत्यमाह बटुः । तथाहि ।

कामं सद्गुणमण्डलाश्रयतया तन्वन्महिष्ठां रुचिं
वैचित्रीभरभाक्सदा शुभदशाश्रेणीश्रियामास्पदम् ।
वंशीहुंकृतिलीलया शिथिलतामेणीदृशां नीयते
वासः कंसनिषूदनाद्य भवता देहेषु गेहेष्वपि ॥ ७ ॥

**मधुमङ्गलः**—अज्जे, किं वि जाणासि जं वंसीहुंकिदिलीलाएत्ति

---

१ आर्ये, सत्यं सत्यम् । अस्मत्प्रियवयस्यहृदयस्य अद्यापि रागो युष्मद्गोपिकानामङ्गेषु न मया दृष्टोऽस्ति । प्रत्युत तासामङ्गराग एवास्य हृदये दृश्यते ।

२ आर्ये, किमपि न जानासि यद्वंशीहुंकृतिलीला इति भणसि । दृष्टं तस्मिन्दिवसे कन्यकानां तीरस्थितान्यम्बराण्यात्मनो हस्तेनोत्क्षिप्यानेन स्कन्धे निक्षिप्तानि ।

---

सारिवा स्यात्' इत्यमरः । 'वाचाटो बहुगर्ह्यवाक्' इत्यमरः ॥ **काममिति ।** गुणानां यन्मण्डलं तदाश्रयतया महिष्ठां रुचिं कान्तिं तन्वन्विस्तारयन् । कीदृशो वा सः । सन्तो ये गुणाः संपत्त्यभिजनकौलिन्यादयस्तैः रुचिं रोचकतां तन्वन् विस्तारयन् । वैचित्री शुक्लनीलरक्तादिभिः स्रक्चन्दनादिसंभोगानां विविधप्रकारत्वम् । शुभा या वस्त्रस्य दशाश्रेणी तत्र याः श्रियः शोभास्तासामास्पदमाश्रयः ।

भणासि । दिट्ठं तहिं दिअहे कण्णआणं तीरट्ठिदाइं अम्बराइं अप्पणो हत्थेण उक्खिविअ इमिणा क्खन्धे णिक्खित्ताइं ।

**कृष्णः**—(सभ्रूभङ्गं बहुमानार्थं ।) आर्ये, हुंकारादपि तथाभावाद्भवद्गोपीनामभिव्यक्तः साध्वीभावप्रभावः ।

**ललिता**—(संस्कृतेन ।)

केनापि धूर्तपतिना खलु शिक्षितोऽसि
मन्त्रं वशीकरणकारणमौषधं वा ।
पुण्योज्वलान्यखिलगोपविलासिनीनां
येन त्वया गृहसुखानि विलुण्ठितानि ॥ ८ ॥

**मधुमङ्गलः**—[1]सच्चं कहेदि ललिदा । अण्णधा मन्तादिमन्तरेण पव्वदुत्तुङ्गा महादाणआ णविन्दीवरादोवि सोम्मसीअलपइदिणा कधं इमिणा संहरिज्जन्ति ।

**ललिता**—[2]अज्ज, जस्स सुमरणं वि तथा संतावणं तं एदं अप्पणो वअस्सं मा क्खु सीअलं भण ।

---

१ सत्यं कथयति ललिता । अन्यथा मन्त्रादिमन्तरेण पर्वतोत्तुङ्गा महादानवा नवेन्दीवरादपि सौम्यशीतलप्रकृत्या कथमनेन संह्रियन्ते ।

२ आर्य, यस्य स्मरणमपि तथा संतापनं तमेतमात्मनो वयस्यं मा खलु शीतलं भण ।

---

शुभग्रहाणां गुरुशुक्रादीनामेव या दशान्तर्दशाश्रेण्यः परम्परास्तासु याः श्रियस्तच्छायाप्रोक्ताः संपत्तयः ॥ **सत्यमिति** । महाबलिष्ठमायाविदैत्यवधादौ मन्त्रौषधादीनां सामर्थ्यासंभवान्मद्वयस्यस्य प्रकृतिरेवेयं नारीगणमनोहारिणीति द्योति-

**मधुमङ्गलः**—[1]भो वअस्स, पइदिसीअलो वि तुमं गोइआहिं उण्होत्ति भणिज्जसि। ता प्पंसिअ जाणिस्सम्। (इति कृष्णवक्षसि हस्तं न्यस्य ससंभ्रमम्।) अहो, सच्चं ज्जेव कहेदि ललिदा। (क्षणं विमृश्य।) ललिदे, विण्णादं विण्णादम्। तुअ राआ चेअ णूणं उण्णा जाए हिअअवट्टिणीए चन्दकोडिसीअलो वि एस उण्णीकिदो।

**ललिता**—[2]अज्ज, एत्थ राअपट्टपत्थरहिअए ताए दुरन्तपेम्मसोकुमज्जहदाए महसहीए कुदो पवेसो संभावीअदि।

**मधुमङ्गलः**—(सरोषम्।) [3]चवले, अम्हवअस्सो तदो वि तुम्हसहीदो णिब्भरं सिणेहकोमलो जं एसो वञ्चिदणिन्दो जोइन्दो विअ एक्कग्गचित्तो णं ज्जेव सव्वदा चिन्तेइ।

---

१ भो वयस्य, प्रकृतिशीतलोऽपि त्वं गोपिकाभिरुष्ण इति भण्यसे। तत्स्पृष्ट्वा ज्ञास्यामि। अहो, सत्यमेव कथयति ललिता। ललिते, विज्ञातं विज्ञातम्। तव राधिकैव नूनमुष्णा यया हृदयवर्तिन्या चन्द्रकोटिशीतलोऽप्येष उष्णीकृतः।

२ आर्य, अत्र राजपट्टप्रस्तरहृदये तस्या दुरन्तप्रेमसौकुमार्यहृताया मत्सख्याः कुतः प्रवेशः संभाव्यते।

३ चपले, मम वयस्यस्ततोऽपि तव सखीतो निर्भरं स्नेहकोमलो यस्मादेष वञ्चितनिद्रो योगीन्द्र इव एकाग्रचित्त एनामेव सर्वदा चिन्तयति।

---

तम्॥ **भो इति**। हृदयवर्तिन्या इत्यनेन ततोऽपि मद्वयस्यस्य प्रेमाभवदिति व्यञ्जितम्॥ **अज्जेति**। राजपट्टप्रस्तरः राज्यसिंहासनस्य प्रस्तरः। कुतः प्रवेशः संभाव्यते। तेन वज्रतुल्यमेतस्य हृदयं कथं तस्यां प्रेम वर्तते इति ज्ञातव्यमिति व्यज्यते॥ **सरोषमिति**। ब्राह्मणस्वाभाव्येन विदूषकस्यापि पर्यवसाने वैदग्ध्यवर्णनस्यानौचित्यात्। नाटके प्रकृतविपर्ययदोषापत्तेश्च व्यञ्जनावृत्तिं त्यक्त्वाभिधयैव ललिता व्यञ्जितप्रश्नस्योत्तरमाह—**चवलेत्यादिना**॥ **हित्वेति**। हे कृष्णार्णव,

**कृष्णः**—(सापत्रपम् ।) धिग्बालिश, कृतमलीकेन नर्मपुञ्जेन ।

**ललिता**—(स्वगतम् ।) दिट्ठिआ वड्ढदि पिअसही[1] ।

**पौर्णमासी**—सुन्दर, विश्राम्यतु नर्ममुद्रा । आकर्णय मद्विवक्षितम् ।

हित्वा दूरे पथि धवतरोरन्तिकं धर्मसेतो-
भङ्गोदग्रा गुरुशिखरिणं रंहसा लङ्घयन्ती ।
लेभे कृष्णार्णव नवरसा राधिकावाहिनी त्वां
वाग्वीचीभिः किमिव विमुखीभावमस्याः करोषि ॥ ९ ॥

**मधुमङ्गलः**—अइ, सुद्धबुद्धिए अज्जवि एदं चेअ पुच्छसि । पेक्ख कूअताणं हदकोकिलाणं वित्तासणत्थं मए एदं पुप्फकोदण्डं णिम्मिदम्[2] ।

**पौर्णमासी**—चन्द्रानन, सापि वत्सा—

---

१ दिष्ट्या वर्धते प्रियसखी ।

२ अयि, शुद्धबुद्ध्याद्यापीदमेव पृच्छसि । पश्य कूजतां हतकोकिलानां वित्रासनार्थं मयेदं पुष्पकोदण्डं निर्मितम् ।

---

राधिकावाहिनी राधिकादिनदी त्वं लेभे । किं कृत्वा । धवतरोर्निकटमपि दूरे पथि हित्वा । धववृक्षा यत्र स्युस्तत्र नद्यो न निःसरन्तीति प्रसिद्धेः । पक्षेऽत्र धवो भर्ता । धर्म एव सेतुस्तस्य भङ्गे उदग्रमुत्साहं यस्याः । गुरु विशदं शिखरिणं गुरुजनं च शिखरितुल्यं कठोरं, गुरुजनमेव शिखरिणमिति वा । रंहसा वेगेन । नवो नूतनः रसो जलीयस्वादुत्वम् । स्रोतोभिः क्वाप्यपर्युषितत्वात् । नव शान्तशृङ्गारादयो रसा यस्याम् । क्वचिद्धि श्लेषादौ निर्वेदादिस्थायित्वेन शान्तादीनामुद्बोधात् । त्वं तु समुद्र इव वाग्भिरेव वीचिभिः किमिव वैमुख्यं करोषीति ॥ **वित्रासनार्थमिति** । तेन वाचा प्रातिकूल्याचरणमस्य न वास्तवं त्वया ज्ञेयं प्रत्युतैतस्येदृशीं दशामालोक्य स्वयमेव त्वं शीघ्रं तत्प्राप्त्युपायं चिन्तयेति द्योतितम् ॥ **सापीति** ।

आलीनां प्रतिहाररोधनविधौ वीक्ष्य प्रयत्नावलीं
बाला तर्कितमाधवीपरिमलस्फूर्तिर्भयाद्वेपते।
किंचालोक्य सुधांशुकान्तसलिलस्पन्दानलिन्दे क्षणा-
देणाङ्कोदयशङ्किनी विकलतामातन्वती मूर्च्छति॥ १०॥

कृष्णः—(स्वगतम्।) हन्त, कठोरोऽयं दशाविवर्तः।

पौर्णमासी—सुन्दर,

प्रणयिषु मिलितेषु प्रेमभाजामुपेक्षा
घटयति कटुपाकान्युच्चकैर्दूषणानि।
दिनमणिरनुरागी प्रोज्झ्य संध्यां हि रक्तां
तमसि निखिलमुग्रे मज्जयत्येष लोकम्॥ ११॥

(कृष्णः सलज्जं नम्रीभवति।)

पौर्णमासी—(पुनर्निभाल्य। सानन्दं स्वगतम्।) दिष्ट्यायं सितालिङ्गितमङ्गीकुर्वन्दक्षिणं न्यमीलयदीक्षणम्। (प्रकाशम्।) गोकुलानन्द, पुरस्तादियं माकन्दवेदी स्वयमलंकर्तव्या निमीलति हेलिबिम्बे सख्योरेकतरा त्वामभीष्टदेशं प्रापयति।

कृष्णः—(सापत्रपम्।) यथाह भगवती। (इति सवयस्यो निष्क्रान्तः।)

पौर्णमासी—पुत्रि ललिते, कामं निर्वृतासि। तदेहि। राधामनुसरावः।

(इत्युभे परिक्रामतः।)

---

अपिकारेणाभिव्यज्यमानार्थमङ्गीकृत्याह—**आलीनामिति**। प्रतिहारस्य द्वास्थस्य। **सुधांशुकान्तेति**। चन्द्रकान्तशिलाभ्यो गलितान् जलबिन्दूनित्यर्थः॥ **प्रणयिष्विति**। कटुपाकानि कटुः पाक उदर्को येषु। तान्येवाह—**दिनमणिरिति**। **निखिलमिति**। अस्मदादिललितादिप्रभृतिकं प्रायः समस्तगोकुलमेव संध्यास्थानीयां राधां दिनमणिस्थानीयमात्मानं च। हिकारात्सशुचयावधारणार्थत्वात्॥ **दक्षिणं न्यमीलयदिति**। विष्णोर्दक्षिणनेत्रस्य सूर्यत्वात्तन्निमीलनेन संकेतं

(ततः प्रविशति विशाखया सह संकथयन्ती राधा ।)

**राधिका**—(संस्कृतेन ।)

सखि जल्पितनारिकेलनीरं सितकर्पूरवृतं हरेर्निपीय ।
तनुसङ्गसुधां विना न तस्य ग्लपिताहं गरलेन जीवितास्मि ॥१२॥

**विशाखा**—अइ अविण्णादणिअमाहप्पे, तादिसो तुह राअस्स गरिमा जेण सो क्खु सामसुन्दरो वि बाढं रत्तीकिदो तधा वि अप्पणो मालिण्णं सङ्कसि ।

**राधिका**—(पुनः संस्कृतेन ।)

नालीकिनीं निशि घनोत्कलिकामशङ्कं
क्षिप्त्वा वृतीरतनुवन्यगजः क्षुणत्ति ।
अत्रानुरागिणि चिरादुदितेऽपि भानौ
हा हन्त किं सखि सुखं भविता वराक्याः ॥ १३ ॥

**पौर्णमासी**—(पुरो राधां दृष्ट्वा ।) पुत्रि ललिते, सख्यास्तव प्रेमोक्तिमुद्रामुद्घाटयितुमुत्कण्ठितासि । तद्भवत्या तूष्णीमेव भवितव्यम् ।

**ललिता**—[२]जं आणवेदि तत्थहोदु ।

**पौर्णमासी**—(राधामुपेत्य । सकैतवविषादम् ।)

---

१ अय्यविज्ञातनिजमाहात्म्ये, तादृशस्तव रागस्य गरिमा येन स खलु श्यामसुन्दरोऽपि बाढं रक्तीकृतस्तथाप्यात्मनो मालिन्यं शङ्कसे ।

२ यद्विज्ञापयति तद्भवतु ।

---

रात्रिकाले इति सूचयति ॥ हेलिबिम्बे सूर्यबिम्बे ॥ **सखीति** । नारिकेलनीरे कर्पूरमिलनाद्विषमिति वैद्यशास्त्रप्रसिद्धेः ॥ **नालीकिनीमिति** । नालीकिनीं कमलिनीम् । अतनुः कन्दर्प एव वन्यगजः । क्षुणत्ति चूर्णयति । प्रातर्यदि सा जीवे-

भवदङ्गसङ्गविषये प्रियोक्तिभि-
मुहुरर्थितोऽपि मदिराक्षि माधवः ।
मनुते मनागपि न ह्रीति हृद्व्यथा-
प्रतिकारयुक्तिरपरा विधीयताम् ॥ १४ ॥

**राधिका—**(सव्यामोहम् ।) अलं एत्थ लज्जिदेण । (इत्यञ्जलिं बध्वा ।)

अब्भंलिहम्हि डहणे णडहं रङ्गणलदं लिहन्तम्हि ।
का पडिआरे जुत्ति मुक्किअ सामलघणुल्लासम् ॥

**पौर्णमासी—**

जरत्यास्त्वं नप्त्री स तु कमलया लालितपदः
कथंकारं तस्मै मुहुरसुलभाय स्पृहयसि ।
प्रसीद व्याहारे मम रचय चेतो दिविचरं
गृहीतुं पाणिभ्यां विधुमहह मा भूत्कुतुकिनी ॥ १५ ॥

**राधिका—**(सगद्गदम् । संस्कृतेन ।)

मया ते निर्बन्धान्मुरजयिनि रागः परिहृतो
मयि स्निग्धे किंतु प्रथय परमाशीस्ततिमिमाम् ।

---

१ अलमत्र लज्जितेन ।
अभ्रंलिहे दहने कोमलां रङ्गणलतां लिहति ।
का प्रतिकारे युक्तिस्त्यक्त्वा श्यामलघनोल्लासम् ॥

---

त्तदा भानुः सूर्यः विकसतां तत्तु न संभवतीति भावः ॥ **अभ्रंलिह इति ।** अभ्रंलिहे आकाशं स्पृशति दहने । कोमलां सुकुमारीं शोभनाम् । अल्पमात्रस्यापि मेघपर्यन्तव्यापकवह्नेरेतस्य प्रतिकारः घनं विना किं कलशादिभृतजलैर्भवति नैवेति भावः॥ **मयेति ।** हे मयि स्निग्धे । अद्यैव हि तत्रापि प्रदोषारम्भ एव न तु कालविलम्बः सोढुं शक्यः । मधुकर्याश्चरणमालानुशीलनेन योग्यता भवेदिति भावः ॥ अधुनैव

मुखामोदोद्गारग्रहिलमतिरत्रैव हि यतः
प्रदोषारम्भे स्यां विमलवनमालामधुकरी ॥ १६ ॥

(इति वैवश्यं नाटयति ।)

**विशाखा**—[1]भअवदि, परित्ताहि परित्ताहि । इअं उत्ताणिदणेत्ता कंपि दारुणं दसाविसेसं लहेदि राही ।

**पौर्णमासी**—(सावेगम् ।) हा धिक् । केयं बलादाकृष्टा महाविषत्कालसर्पी । (इति सदयं राधामालिङ्ग्य ।) वत्से, समाश्वसिहि समाश्वसिहि । भावाभिव्यक्तये प्रोत्थापितासि । तदिदं यथार्थमाकर्ण्यताम् ।

अमितविभवा यस्य प्रेक्षालवाय भवादयो
भुवनगुरवोऽप्युत्कण्ठाभिस्तपांसि वितन्वते ।
अहह गहनादृष्टानां ते फलं किमभिष्टुवे
सुतनु स तनुर्जज्ञे कृष्णस्तवेक्षणतृष्णया ॥ १७ ॥

**ललिता**—(संस्कृतेन ।)

त्वद्वार्तोत्तरगीतगुम्फितमुखो वेणुः समन्तादभू-
त्त्वद्वेशोचितशिल्पकल्पनमयी सर्वा बभूव क्रिया ।
त्वन्नामानि बभूवुरस्य सुरभीवृन्दानि वृन्दाटवी
राधे त्वन्मयवल्लिमण्डलघना जाताद्य कंसद्विषः ॥ १८ ॥

**राधिका**—(समाश्वस्य । स्वगतम् ।) [2]चञ्चल हे चित्त, अज्जवि ण पत्तिआएसि ।

---

१ भगवति, परित्राहि परित्राहि । इयमुत्तानितनेत्रा कमपि दारुणं दशाविशेषं लभते राधा ।

२ चञ्चल हे चित्त, अद्यापि न प्रत्याययसि ।

---

प्राणत्यागे त्वदाशीर्भवेदिति मनसिकृत्वा प्राणांस्त्यक्तुमुपक्राम्यन्तीं राधामभिप्रेत्य सवैकल्यमाह—**इयमिति** ॥ **अमितेति** । हे सुतनु, किमभिष्टुवे स्तौमि । तनुः

**पौर्णमासी**—पुत्रि ललिते, बाढं प्रगल्भासि। तद्विशाखा याव-न्माकन्दमूलान्मुकुन्देन सह प्रत्यावर्तते तावदत्र संकेतिते कर्णिकारकुञ्जे गोपय त्वं गोपालिकाभ्यो राधिकाम्। मया तु स्वकृत्याय गन्तव्यम्।

(इति तिस्रोऽपि निष्क्रान्ताः।)

**विशाखा**—(दूरं परिक्रम्य।) से[1] माकन्दो एसो पुरो दीसइ जत्थ कण्हो।

(ततः प्रविशति कृष्णः।)

**कृष्णः**—(सोत्कण्ठं प्रतीचीमवलोक्य।)

सद्यस्तप्तहिरण्यपिण्डमधुरं चण्डत्विषो मण्डलं
सन्नं हन्त तरङ्गिणीरतिगुरोरङ्गीचकाराम्भसि।
द्रागेतान्यपि घूकनेत्रपटलीसिद्धाञ्जनक्षोदतां
बिभ्रन्ति द्विपविभ्रमाणि रुरुधुर्ध्वान्तानि वृन्दावनम्॥ १९॥

(सोत्सुक्यं पन्थानमुद्वीक्ष्य।) कथमद्यापि सखी काचिन्नेत्राध्वनि मे नाव-ततार। (इति परावृत्य प्राचीं पश्यन्।)

सान्द्राः सुप्तकुमुद्वतीकुलवधूनिद्राभिदाकोविदाः
कुर्वाणाः कलुषश्रियं परिभवातङ्केन पङ्केजिनीम्।
संरम्भादभिसारिकाभिरसकृद्व्याकृष्यमाणोद्गमा-
भासः शीतकरस्य हन्त हरितं पूर्वां परिष्कुर्वते॥ २०॥

(इति वैयग्र्यं नाटयति।)

---

१ स माकन्द एष पुरो दृश्यते यत्र कृष्णः।

---

क्षीणः॥ सद्य इति। अस्तं गच्छतः सूर्यबिम्बस्य रोचकत्वोपचारेण मधुरमिति पदमुपन्यस्तम्। तरङ्गिणीरतिगुरोः समुद्रस्य। घूकाः पेचकास्तेषां नेत्रसमूहानाम्। हस्तिनामिव विभ्रमो येषाम्॥ सान्द्रा इति। हरितं दिशम्॥ इयमिति।

ध्यात्वा धर्मं धृतिमुदयिनीं किं बबन्धाद्य राधा
तीव्राक्षेपैः किमुत गुरुभिर्लम्भिता वा निवृत्तिम् ।
किं वा कष्टमभजत दशां तामविस्पन्दमन्दा-
मिन्दौ विन्दत्युदयमपि यन्नाजगामाद्य दूती ॥ २१ ॥

**विशाखा**—(लतान्तरे सोत्कीविकम् ।) [1]एसो णूणं उक्कण्ठाए मह ज्जेव पअवीं विलोएदि कण्हो । ता क्खणं परिहसिस्सम् ।

**कृष्णः**—(सानन्दम् ।) इयं विशाखापि चञ्चलपञ्चशाखा सखी मिलिता । (इत्युपसृत्य ।) सखि, तवोपलम्भात्तामेव रम्भोरुं लब्धामवैमि यद्विशाखाराधयोरद्वैतम् ।

(विशाखा मुखमानमय्य मौनमालम्बते ।)

**कृष्णः**—सखि, किमत्र तूष्णीमसि ।

**विशाखा**—[2]चन्दमुह, मन्दभाइणी म्हि । ता किं विण्णविस्सम् ।

**कृष्णः**—(सशङ्कम् ।) किमर्थमिदम् ।

**विशाखा**—[3]सुन्दर, ण मे सरस्सई निस्सरदि । होदु । तधा वि संवरिदुं ण जुत्तमिदम् । (इति मुखवैकृत्यमभिनीय ।) भो भट्टिदारअ, सा पिअसही अहिमण्णुणा हदासेण महुरापत्तणम्मि—(इत्यर्धोक्ते शुष्कं रोदिति ।)

---

१ एष नूनमुत्कण्ठया ममैव पदवीं विलोकयति कृष्णः । तस्मात्क्षणं परिहासं करिष्ये ।

२ चन्द्रमुख, मन्दभागिन्यस्मि । तस्मात्किं विज्ञापयिष्ये ।

३ सुन्दर, न मे सरस्वती निःसरति । भवतु । तथापि गोपायितुं न युक्तमिदम् । भो भर्तृदारक, सा प्रियसखी अभिमन्युना हताशेन मथुरापत्तने—।

---

चञ्चलाः पञ्चशाखाः पर्वाणि यस्याः । 'पञ्चशाखः शयः पाणिः' इत्यमरः । पक्षे विगतशाखापि पञ्चशाखा यस्या इति विरोधः । विशाखाराधयोरद्वैतं इति राधा-

कृष्णः—(सव्यथम् ।) कदा नाम नीता ।

विशाखा—[1]जदा भअवदी तुम्ह सआसं लद्धा ।

कृष्णः—(सखेदम् ।) विशाखे, कथंकारं नीता ।

विशाखा—[2]तुअम्मि भाअं तक्किअ ।

कृष्णः—कथं स तर्कितः ।

विशाखा—[3]लोओत्तरीहोन्तो अत्थो ण कस्स तक्कणिज्जो होइ ।

कृष्णः—

ग्लपयति वपुर्दुर्लीलो मे बलान्मलयानिलो
विकिरति करैरिन्दुः क्षोदं तुषाग्निभवं रुषा ।
मदनहतकस्तर्जत्येष स्फुटैरलिहुंकृतै-
स्त्रुटिरपि विना राधां नेतुं मया न हि शक्यते ॥ २२ ॥

(इति व्यामोहं नाटयति ।)

विशाखा—(सखेदं ससंभ्रमम् ।) [4]गोउलानन्द, समासस्स समासस्स । मए क्खु परिहसिदम् । सा तवस्सिणी ताए रङ्गणमालिआए रक्खिदपराणत्थि ।

कृष्णः—(समाश्वस्य ।) धूर्ते, भद्रेण कदर्थितोऽस्मि ।

विशाखा—[5]अप्पणो गुणं ण सुमरसि ।

---

१ यदा भगवती तव सकाशं लब्धा ।

२ त्वयि भावं तर्कयित्वा ।

३ लोकोत्तरीभवन्नर्थो न कस्य तर्कणीयो भवति ।

४ गोकुलानन्द, समाश्वसिहि समाश्वसिहि । मया खलु परिहसितम् । सा तपस्विनी तया रङ्गणमालिकया रक्षितप्राणास्ति ।

५ आत्मनो गुणं न स्मरसि ।

---

विशाखेऽनेकपर्यायत्वात् । 'तूष्णीं तूष्णीकाम्' इत्यमरः । सरस्वती वाणी । भो

**कृष्णः**—सखि, वर्ण्यतां प्रेम्णामङ्कः प्रियायाः ।

**विशाखा**—(संस्कृतेन ।)

दूरादप्यनुषङ्गतः श्रुतिमिते त्वन्नामधेयाक्षरे
सोन्मादं मदिरेक्षणा विरुवती धत्ते मुहुर्वेपथुम् ।
आः किं वा कथनीयमन्यदपि ते दैवाद्घनाम्भोधरे
दृष्टे तं परिरब्धुमुत्सुकमतिः पक्षद्वयीमिच्छति ॥ २३ ॥

**कृष्णः**—तदेहि । सत्वरमेव प्रेयसीं प्रेक्षावहि ।

(इति परिक्रामतः ।)

(ततः प्रविशति ललितयाराध्यमाना राधा ।)

**राधा**—(सखेदम् । संस्कृतेन ।)

प्रत्यूहेन पराहता नु किमभूद्गन्तुं सखी न क्षमा
तस्याः किं तु निवेदितेन हि हरिर्विश्रम्भमभ्याययौ ।
हा हन्त प्रतिकूलतां मयि गतः किंवा विधिर्दारुणो
यद्दूराद्वनमालिकापरिमलोऽप्यद्यापि नासाद्यते ॥ २४ ॥

**विशाखा**—(पुरोऽनुसृत्य । संस्कृतेन ।)

नम्रीकृत्य शिरो मुहुस्तरुवृतामालोकते वर्तनी-
मुत्थाय क्षणमासनात्पुनरहो श्रान्ता निषीदत्यसौ ।
द्वित्राण्येत्य पदानि वीक्ष्य ललितां भूयः परावर्तते
पश्याग्रे तव संगमोत्सुकतया राधा परिक्राम्यति ॥ २५ ॥

**कृष्णः**—

वदनदीप्तिविधूतविधूदया
कुमुदधामधुरामधुरस्मिता ।

---

भर्तृदारक, नाट्योक्तौ राजपुत्रो भर्तृदारकशब्देनोच्यते ॥ पूर्वं स्निग्धैरेभिरित्यादिना वयं कीदृशं कदर्थिता इति भावः ॥ **नम्रीकृत्येति** । वर्तनीं पन्थानम् ॥ **वदने-**

नखजितोडुरियं हरिणेक्षणा
तृणयति क्षणदामुखमाधुरीम् ॥ २६ ॥

**राधिका**—(सकातर्यम्। संस्कृतेन।)

हम्भङ्गीनां किमु परिमलैः प्रेयसीभिर्निरुद्धः
किं वा स्वैरी मयि विहितवानुद्धतायामुपेक्षाम्।
हा चान्द्रीभिर्द्युतिमिरभितो भ्रस्यमाणेऽपि लोके
प्राप्तो नायं यदि हलतिकामन्दिरे नन्दसूनुः ॥ २७ ॥

**कृष्णः**—(पुरोऽनुसृत्य।) अहो, साधीयान्प्रसादः पौर्णमास्याः, यदियमामोदयति कौमुदी।

**राधिका**—(चमत्कृतिमभिनीय। स्वगतम्।) [1]हुं, एत्तिअ भाअधेआणं भाअणं संवुत्तो एस जणो। (इति वैवश्यमालम्बते।)

**विशाखा**—(संस्कृतेन।)

अहो धन्या गोप्यः कलितनवनर्मोक्तिभिरलं
विलासैरानन्दं दधति मधुरैर्या मधुभिदः।
धिगस्तु स्वं भाग्यं मम यदिह राधा प्रियसखी
पुरस्तस्मिन्प्राप्ते निविडजडिमाङ्गी विलुठति ॥ २८ ॥

---

१ अहो, एतावद्भागधेयानां भाजनं संवृत्त एष जनः।

---

त्यादि। वदनस्य दीप्त्या विधूतो विखण्डितो विधूदयो यया। कुमुदधामधुरा कुमुदकान्तीनामाश्रये मधुरं स्मितं यस्याः। नखैर्जिता उडवस्तारका यया। क्षणदामुखं प्रदोषस्तस्य माधुरीं तृणयति तृणीकरोति। तच्छोभारूपाणां चन्द्रकुमुदनक्षत्राणां तिरस्कारात् ॥ **अहो धन्या इति**। अहो धन्या गोप्य इत्यनेन सर्वाभ्योऽपि तस्यास्त्वयि कृष्णे प्रेमातिशय इति व्यज्यते ॥ **छद्दलेति**। छइल्ल छविल।

**ललिता**—अइ लज्जालुए राहिए, अग्गदो एसो दे माणसहंसहरो णाअरो । ता मा क्खु सज्झसेण विम्हला होहि । जं पगब्भदा जेव अज्ज कज्जसाहिणी । (इति राधिकां बलादिवाकृष्य कृष्णान्तिकमासाद्य च । संस्कृतेन ।)

विदूरादालोक्य प्रबलतरतृष्णातरलितः
सखीचेतोहंसस्तव वदनपद्मे निपतितः ।
भ्रमद्भ्रूपाशाभ्यां कितव तमबध्नादिह भवा-
न्किमसाधु न्याय्या व्यवसितिरियं ते विसदृशी ॥ २९ ॥

**कृष्णः**—(स्मित्वा ।) ललिते, मद्विधा नाबलार्थहारिणो भवन्ति ।

**विशाखा**—धम्मिअ, सच्चं सच्चम् । भद्दकालितित्थकलम्बो ज्जेव अत्त पमाणम् ।

**कृष्णः**—सखि ललिते, मद्विशुद्धौ कथं वः प्रतीतिः ।

**ललिता**—छइल्लपरिक्खाविहाणेण ।

**कृष्णः**—वामे, कामं कथ्यतां परीक्षा । मम भ्राजिष्णुरयं कीर्तिशुभ्रांशुर्न मृषा कलङ्कीकर्तुं शक्यते ।

**ललिता**—(संस्कृतेन ।)

त्वमुन्नद्धे राधास्तनकनककुम्भान्तरमिल-
त्तनूजालीकालोरगयुवतिमूर्धप्रणयिनि ।
यदि क्षोभोन्मुक्तः कलयसि करं नायकमणौ
ततस्ते ध्वस्ताङ्कः प्रचरति यशोमण्डलशशी ॥ ३० ॥

---

१ अयि लज्जालुके राधिके, अग्रत एष ते मानसहंसहरो नागरः । तन्मा खलु साध्वसेन विह्वला भव । यस्मात्प्रगल्भतैवाद्य कार्यसाधिनी ।

२ धार्मिक, सत्यं सत्यम् । भद्रकालितीर्थकदम्ब एवात्र प्रमाणम् ।

३ विदग्धपरीक्षाविधानेन ।

---

विदग्ध इत्यर्थः । **त्वमुन्नद्धे इति** । राधायाः स्तनकनककुम्भयोरन्तरे मध्ये

**कृष्णः**—(कृत्रिमं त्रासमभिनीय।) हन्त निष्ठुरे, नाज्ञैव ललितासि। यदल्पीयसि तावदर्थे गरीयसीं सर्पघटाख्यां परीक्षामुपक्षिपसि।

**राधिका**—(सप्रणयेर्ष्यम्।) [1]ललिदे, चिट्ठ चिट्ठ। (इति सभ्रूभङ्गम-वलोकते।)

**ललिता**—[2]विसाहे, णट्ठघणुद्देसकारिणीं मं कीस तज्जति राहिआ।

**विशाखा**—[3]ललिदे, इमाए हिअअट्ठिदं आऊदं मए जाणीअदि।

**ललिता**—[4]तं कधेइ। सुणिस्सम्।

**विशाखा**—(संस्कृतमाश्रित्य।)

स्पृशन्तं यो मेघानघमनघकर्मा तमवधी-
द्विषज्वालाजालोन्मदमदमयत्कालियमहिम्।
अकार्षीद्द्रोपेन्द्रद्रुहमजगरं दिव्यपुरुषं
भुजङ्गाचार्येऽस्मिन्किमिव घटते यन्नगघटः॥ २१॥

**ललिता**—(विहस्य।) [5]हला रधे, अप्पणो परिअररूवाए ण जाणासि माहप्पं इमाए। पेक्ख। तह हि।

अवि गरुडस्स सिहामणिमुरगवहूगव्वहारिविरुदस्स।

---

१ ललिते, तिष्ठ तिष्ठ।

२ विशाखे, नष्टघनोद्देशकारिणीं मां कस्मात्तर्जयति राधिका।

३ ललिते, अस्या हृत्स्थितमाकूतं मया ज्ञायते।

४ तत्कथय। श्रोष्यामि।

५ सखि राधे, आत्मनः परिकररूपाया न जानासि माहात्म्यमेतस्याः। पश्य। तथा हि।

अपि गरुडस्य शिखामणिमुरगवधूगर्वहारिविरुतस्य।

---

मिलन्ती या तनूजाली सैव कालोरगयुवतिस्तन्मूर्धप्रणयिनि नायकमणौ॥ स्पृशन्तमिति। 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः। अनघकर्मा अदुःखकर्मा॥

पहवइ सहि मोहेदुं तुह णअरोमाअलीभुअगी ॥ ३२ ॥

**राधिका**—(सप्रणयरोषम् ।) [1]अइ धिट्ठे ललिदे, एत्थ आणविअ मं विडम्बेसि । ता गदुअ वुड्ढिआणं गोईणं विण्णविस्सम् । (इति गन्तुमिच्छति ।)

**ललिता**—[2]अइ मुद्धे, णं साहुं चोरं वा जाणिअ जाहि । (इति पटाञ्चलमाददाति ।)

**कृष्णः**—चण्डि ललिते, यद्यतो दुराग्रहान्न विश्रान्तासि, ततः करवाणि परीक्षाम् । (इति राधामनुसर्पति ।)

**ललिता**—(विलोक्य ।) [3]छइल्ल, चिट्ठ चिट्ठ । विण्णादं विण्णादम् । (इति संस्कृतेन ।)

प्रारब्धे पुरतः परीक्षणविधौ त्रासानुविद्धस्य ते
खिन्नोऽयं करपल्लवस्तरलतां कम्पोद्गमैः पुष्यति ।
रोमाञ्चं शिखिपिच्छचूडनिबिडं मूर्तिश्च (?) धत्ते ततो
ज्ञातस्त्वं ननु पश्यतोहरपुरीसाम्राज्यधौरेयकः ॥ ३३ ॥

**कृष्णः**—(संकुचन्निभूय ।) हन्त, धीगौरवं गौरीणां यदहमेव चौरीकृतोऽसि ।

---

प्रभवति सखि मोहयितुं तव नवरोमावलीभुजगी ॥

१ अयि धृष्टे ललिते, अत्रानीय मां विडम्बयसि । तद्गत्वा वृद्धानां गोपीनां विज्ञापयिष्ये ।

२ अयि मुग्धे, एनं साधुं चौरं वा ज्ञात्वा यासि ।

३ विदग्ध, तिष्ठ तिष्ठ । विज्ञातं विज्ञातम् ।

---

**द्वलेति** । एतस्यास्तनूजालीभुजङ्ग्याः ॥ **अवीति** । गरुडशिखामणिं गरुडवाहनमपि भङ्ग्या कृष्णमिति । गरुडस्य कीदृशस्य । उरगेत्यादि ॥ **प्रारब्ध इति** । तव करपल्लवः कम्पोद्गमैः हेतुभिस्तारल्यं तरलत्वं पुष्यति आधिक्येन प्रकटयति । पश्यतोहरपुरीणां साम्राज्यस्य धौरेयक आश्रयः ॥ **हन्तेति** । धीगौरवं धियां

ललिता—[1]छइल्ल, दिट्ठिआ अप्पणो मुहेण अङ्गीकिदम् ।

कृष्णः—सखि, सौहृदेनोपदिश्यतां मे श्रेयसः पन्थाः, येनाहमपराधीभवन्न व्रजामि ।

ललिता—(संस्कृतमाश्रित्य ।)

गतानां राधायाः स्तनगिरितटे योगमभितो
विविक्ते मुक्तानां त्वमिह तरलीभूय तरसा ।
विशुद्धानां मध्ये प्रविश शरणार्थी सहृदया
भजन्ते साद्गुण्यादपि पृथुलदोषं हि पुरुषम् ॥ ३४ ॥

कृष्णः—सखि, साधूपदिष्टं त्वया । (इति सानन्दमुपसृत्य पाणौ राधां दधाति ।)

राधिका—(सगद्गदम् ।) [2]सुन्दर, अजुत्तं तुज्झ एदम् । (इति पाणिमाच्छिद्य शाखिनां तिरोदधाति ।)

कृष्णः—(राधामप्रेक्ष्य । सशङ्कम् ।) हन्त । सख्यौ, क्व वां प्रियसखी ।

उभे—[3]मोहण, णिरूविअ भणिस्सम्ह । (इति शाखिपृष्ठमासाद्य ।)

---

१ विदग्ध, दिष्ट्या आत्मनो मुखेनाङ्गीकृतम् ।

२ सुन्दर, अयुक्तं तवेदम् ।

३ मोहन, निरूप्य भणिष्यावः । सखि राधे, नर्मशीलं कृष्णं परिहसितुं लब्धोऽवसरः । तत्क्षणं सावहित्था भव ।

---

गौरवम् ॥ **सखीति** । अपराधीभवन् । पक्षे राधाया अपगतो राधोऽपराधस्तथा भवन् ॥ **गतानामिति** । स्तनगिरितटे योगं योगाभ्यासं संयोगं च । मुक्तानां प्राप्तमोक्षाणां मुक्तानां च । तरलीभूय । पक्षे तरलो हारमध्यगस्तथाभूय । शरणार्थी आश्रयार्थी च । एतदेवार्थान्तरोपन्यासेनाह—सहृदयाः साधवः । प्रकृते च हृदयेन सहवर्तमाना मुक्ता एव । साद्गुण्यादिति स्पष्टम् । प्रकृते उत्तमसूत्रप्रोतत्वात् । पृथुलः पुष्टः दोषा यस्य । प्रकृते पृथुलौ दोषौ भुजौ यस्य तं स्वाम् । व्यङ्ग्यार्थमप्यादाय—**साधूपदिष्टमिति** । शाखिनां वृक्षाणाम् ।

हला राहि, णम्मसीलं कण्हं परिहसिदुं लद्धो ओसरो । ता क्खणं सावहित्था होइ ।

**राधिका**—(सव्याजं भ्रुवौ विभुज्य ।) ललिदे, परिहसिदुं[1] ति किं भणासि । जं ईरिसं साहसं ण क्खु मादिसीए जुत्तम् । ता पत्थिदम्हि ।

**ललिता**—(कृष्णमभ्युपेत्य ।) चेन्दाणण,[2] अम्हपिअसही किं वि विण्णविदुकामावि भाएदि ।

**कृष्णः**—सखि, न खल्वत्र वशवर्तिनि जने भीतिरवकाशं लभते । तन्निकाममाज्ञापयतु ।

**ललिता**—(संस्कृतमाश्रित्य ।)

चेतस्ताम्यति मे भयोर्मिभिरलं पाणिद्वयं कम्पते
　कण्ठः सज्जति हन्त घूर्णति शिरः खिद्यन्ति गात्राण्यपि ।
गोष्ठाखण्डल चण्डसाहसविधौ तेनास्मि नाहं क्षमा
　यद्दूरादभिसारितो निशि भवानेतन्मम क्षाम्यतु ॥ ३५ ॥

**कृष्णः**—(स्वगतम् ।) न जाने नर्मतो धर्मतो वायं गिरां गरिमा ।

**राधिका**—(किंचिदाविर्भूय ।) सहि,[3] तूण्णं पत्थावेहि णम् । जाव कोवि ण पेक्खदि ।

**कृष्णः**—(सखेदमात्मगतम् ।) चपलप्रेमाणो हि बालारमण्यः । तत्किमिवासंभाव्यं नाम । (प्रकाशम् ।)

---

१ ललिते, परिहसितुमिति किं भणसि । यदीदृशं साहसं न खलु मादृश्या युक्तम् । तत्प्रस्थितास्मि ।

२ चन्द्रानन, अस्मत्प्रियसखी किमपि विज्ञापयितुकामापि बिभेति ।

३ सखि, तूर्णं प्रस्थापयैनम् । यावत्कोऽपि न पश्यति ।

---

**चेत इत्यादि** । सज्जति सक्ता भवति । वाङ्न निःसरतीत्यर्थः ॥ **त्वयाहूत इति** ।

त्वयाहूतः पार्श्वे प्रणयनिकुरम्बेण रभसा-
दसिद्धार्थो राधे भवितुमिह युक्तः कथमहम् ।
श्रियाकृष्टः कृष्णायसमणिरयस्कान्तशिलया
स्फुटं तामस्पृष्ट्वा भजति किमदूरे स्थगितताम् ॥ ३६ ॥

**ललिता**—[1]गोउलाणन्द, राहिअं कीस उवाल्हेसि । णं धम्म-हदअं च्चेअ उवाल्ह, जो क्खु हदासो दोणं णिब्भराणुरत्ताणं अन्तरे पडिबन्धीहोदि ।

**कृष्णः**—पश्य पश्य ।

सखि निर्भरमनुरक्ताः प्रणयिनमनुयान्ति धर्ममपि हित्वा ।
इयमतिरागा प्राची चुम्बति विधुमिन्द्रनाथापि ॥ ३७ ॥

**ललिता**—[2]तुम्हाणं उत्तरपउत्तरे को णाम पहवदि । ता इदो विजयेन्तु सामिपादा ।

**राधिका**—(साकूतमनुसृत्य ।) [3]ललिदे, अप्पणो मुहेण किंवि विण्णविअ णं णिवट्टावइस्सम् । (इति ललितामवेक्ष्य । संस्कृतेन ।)

---

१ गोकुलानन्द, राधिकां कस्मादुपालम्भसे । नूनं धर्महतकमेवोपालभस्व, यः खलु हताशो द्वयोर्निर्भरानुरक्तयोरन्तरे प्रतिबन्धीभवति ।

२ युष्माकमुत्तरप्रत्युत्तरे को नाम प्रभवति । तस्मादितो विजयन्तां स्वामिपादाः ।

३ ललिते, आत्मनो मुखेन किमपि विज्ञाप्यैनं निवर्तयिष्ये ।

---

अयस्कान्तशिलया लोहकान्तमणिना करणेन श्रिया कर्त्र्या आकृष्टः कृष्णायसमणिर्लोहकर्तृकामयस्कान्तशिलामस्पृष्ट्वा किं दूरे स्थगिततां भजति । अपि तु शीघ्रं स्पृष्ट्वा तस्य संसक्तमेव तिष्ठति । अहमपि तथा भवेयमिति दृष्टान्तार्थः ॥ **इन्द्रेति ।** ऐश्वर्यवानपि नाथः स्वःपालको यस्याः सा प्राची दिक् । **इयमिति ।** तर्जन्या-दिश्यमाना भवति विधुं चन्द्रं विष्णुमिव चेति । तस्मात्तथैवौचित्यमास्तामिति भावः ॥

समन्तान्मे कीर्तिर्मुखरितसतीमण्डलमुखा
कलङ्केनोन्मुक्तं कुलमविकलश्रीरपि पतिः ।
चलच्चिल्लीलीलाजितमदनधन्वोद्धतिरयं
तदस्मिन्नारम्भे हृदयमफलं विक्लवयति ॥ ३८ ॥

**कृष्णः**—(राधां निरूप्य । सोच्छ्वासमात्मगतम् ।)

धावन्त्याः श्रुतिशष्कुलीपरिसरं सज्ञादपाङ्गश्रियो
धत्ते हीरककुण्डलं मरकतोत्तंसद्युतिं सुभ्रुवः ।
वागन्तःस्मितभाग्विभाति तदिदं शङ्के सखीशिक्षया
वैमुख्यं किल कृत्रिमं विलसति क्रान्तिं मनो मा स्म गाः ॥३९॥

**ललिता**—(कृष्णमुखमालोक्य । जनान्तिकम् ।) विसाहे, इङ्गिदेण लक्खेमि । उण्णीदं इमिणा अम्हाणं रहस्सम् ।

**विशाखा**—अध इम् ।

**कृष्णः**—(सस्मितम् ।) ललिते, कृतमत्र वञ्चनचातुरीप्रपञ्चेन । नहि लूतया प्रसारितास्तन्तवो गन्धसिन्धुरस्य बन्धाय प्रभवन्ति ।

---

१ विशाखे, इङ्गितेन लक्ष्ये । उन्नीतमनेनास्माकं रहस्यम् ।
२ अथ किम् ।

---

**युष्माकमिति** । विजयन्तामितो गच्छन्तु ॥ **समन्तादिति** । चलन्त्योश्चिल्ल्योर्भ्रुवोर्लीलया जिता मदनस्य धन्वनो धनुष उद्धतिरौद्धत्यं येन तथाभूतः सन् स्वहृदयम् । अविकला श्रीर्यस्य । पक्षे अविमर्शस्तस्य कला वैदग्धी यत्र तादृशी श्रीर्यस्य ॥ **धावन्त्या इति** । अपाङ्गश्रियः श्रुतिशष्कुलीपरिसरं कर्णकुहरप्रान्तस्थानं प्रति धावन्त्याः ॥ 'त्रिपताककरेणान्यानपवार्यान्तरा कथा । या मिथः क्रियते द्वाभ्यां तज्जनान्तिकमुच्यते ॥' **विसाहे इति** । उन्नीतम् । अनुमितमित्यर्थः ॥ **ललिते इति** । लूतया ऊर्णनाभकीटेन । गन्धसिन्धुरस्य मत्त-

**विशाखा**—संहि राहे, णिप्फलं विलम्बसि । झत्ति किदत्थीकुण अप्पणो पिअजणम् ।

**कृष्णः**—(सानुरागम् ।)

कर्णद्वन्द्वमिदं रुतैरिह *कुहूकण्ठस्य कुण्ठीकृतं
सद्यः कोमलभारतीपरिमलेनोल्लाघय श्लाघया ।
निःशङ्कं किल शीतलीकुरु परीरम्भेण रम्भोरु मे
गम्भीरस्मरवह्नितापलहरीपात्राणि गात्राण्यपि ॥ ४० ॥

**विशाखा**—सुंन्दर, एसा भअवदी लज्जा ज्जेव राहिआरूवेण उत्तिण्णा । ता जाव णं चाडुबन्धेण संमुहीकदुअ समप्पेम्ह ताव भवन्तेण सोम्मसीअलवुत्तिणा होदव्वम् ।

**कृष्णः**—(सादरम् ।)

अयमत्र निसर्गशीतलः सखि राधाकुचयोरवस्थितिम् ।
नवकाञ्चनकुम्भयोरहं स्फुरदिन्दीवरदामवद्भजे ॥ ४१ ॥

(इति मन्दं मन्दं राधामुपसर्पति ।)

**राधिका**—(किंचिदपसृत्य ।) संहि विसाहे, सुट्ठु भीदम्हि । ता किंति मं उवेक्खसि ।

---

१ सखि राधे, निष्फलं विलम्बसि । झटिति कृतार्थीकुर्वात्मनः प्रियजनम् ।

२ सुन्दर, एषा भगवती लज्जैव राधिकारूपेणावतीर्णा । तस्माद्यावदेनां चाटुबन्धेन संमुखीकृत्वा समर्पयामि तावद्भवता सौम्यशीतलवृत्तिना भवितव्यम् ।

३ सखि विशाखे, सुष्ठु भीतास्मि । तस्मात्किमिति मामुपेक्षसे ।

---

*. पिकस्य.

**ललिता**—राहे, एसा विसाहेति विक्खीदा कधं तुमं पच्छादिअ रक्खिदुं पहवदु। ता रक्खणक्खमं णं वणमालिअं ज्जेव भजेहि, जं एसा आअडिदशिलीमुहा दीसइ।

**राधिका**—(सप्रणयरोषम्।) अइ दुम्मुहि ललिदे, सिद्धा चेअ तुम्ह मणोरहा। तधावि ण णिव्वुत्तासि।

**विशाखा**—हला राहि, सव्वाणं गोउलजणाणं अभअदाणसत्ते दीक्खिदो कण्हो। ता इदो किं ति भाएसि।

**कृष्णः**—सुन्दरि राधे, त्वमेव सुष्ठु बलिष्ठासि। ततः कथं मत्त-स्तव भीतिः। तथा हि।

अहीनो भ्रूगुच्छः कुटिलवलनैर्वेष्टयति मां
खरस्ते नेत्रान्तो मयि वितनुते ताडनविधिम्।
प्रलम्बः केशान्तो हरति हठवृत्त्या मम बलं
भजद्भिस्त्वामेतैरहमिह जितैरस्मि विजितः॥ ४२॥

---

१ राधे, एषा विशाखेति विख्याता कथं त्वां प्रच्छाद्य रक्षितुं प्रभवतु। तद्रक्षणक्षमामेनां वनमालामेव भज, यदेषाकृष्टशिलीमुखा दृश्यते।

२ अयि दुर्मुखि ललिते, सिद्धा एव तव मनोरथाः। तथापि न निर्वृत्तासि।

३ हला राधे, सर्वेषां गोकुलजनानामभयदानसत्रे दीक्षितः कृष्णः। तस्मादितः किमिति भीतासि।

---

हस्तिनः॥ उल्लाघय निर्व्याधीकुरु। 'उल्लाघो निर्गतो गदात्' इत्यमरः॥ **राहे इति**। 'अलिबाणौ शिलीमुखौ' इत्यमरः। बाणयुक्तं बाणसमूहं भज इत्यर्थः। दुष्प्रवेशत्वात् स त्वां रक्षिष्यतीत्यर्थः। पक्षे भ्रमरयुक्तां कृष्णवनमालामभयदाम्॥ **हलेति**। सत्रं यज्ञम्॥ **अहीन इति**। अहीनामिनः कालियः। पक्षे पृथुलः। खरो धेनुकस्तीक्ष्णश्च। प्रलम्बोऽसुरः। पक्षे लम्बमानश्च। बलं मम भ्रातरं सत्त्वं

**ललिता**—कॅण्ह[1], कुदो इमाए वलिट्ठत्तणं जं अप्पणो घणं तुअत्तो मोआविदुं ण समत्था ।

**विशाखा**—(संस्कृतेन ।)

विधत्ते कंसारिः सखि परमहंसालिषु रतिं
मनोहंसेन्द्रं ते कथमपि न निर्मोक्ष्यति ततः ।
बधानामुं सद्यस्त्वमपि भुजवल्लीविलसितैः
शठे कः क्षेमार्थी सुमुखि नहि शाठ्यं घटयति ॥ ४२ ॥

**राधिका**—(साभ्यसूयम् ।) पॅावे[2] विसाहिए, तुमं वि ललिदाए विसलदाए मारुदेण दूसिदासि ।

**कृष्णः**—सखि ललिते, त्वत्प्रसादामृते काममदत्तावगाहनया कथमद्यापि तटस्थीकृतोऽसि राधया ।

**ललिता**—कॅण्ह[3], मुञ्च चातुरीवित्थारम् । ण क्खु चन्दाअली विअ झत्ति वाअमेत्तएण सुलहप्पसादा अम्हपिअसही ।

**कृष्णः**—कथं सुलभस्ते सखीप्रसादः ।

**ललिता**—सेॅआसंताणेण[4] ।

**कृष्णः**—(सानन्दम् । राधां पश्यन् ।)

---

१ कृष्ण, कुत एतस्या बलिष्ठत्वं यदात्मनो धनं त्वत्तो मोचयितुं न समर्था ।

२ पापे विशाखे, त्वमपि ललिताया विषलताया मारुतेन दूषितासि ।

३ कृष्ण, मुञ्च चातुरीविस्तारम् । न खलु चन्द्रावलिरिव झटिति वाङ्मात्रेण सुलभप्रसादास्मत्प्रियसखी ।

४ सेवासंतानेन ।

---

च । पुरा मया जितैरप्येतैः शत्रुभिस्त्वां भजद्भिरहं विजितस्तेन सतस्त्वत्तरणं दुर्जेयमेव ॥ **विधत्त इति** । परमहंसालिषु । पक्षे भक्तश्रेणिषु ॥ **किमि-**

किं चन्दनेन कुचयो रचयामि चित्र-
मुत्तंसयामि कबरीं तव किं प्रसूनैः।
अङ्गानि लङ्गिमतराङ्गि करेण किं वा
संवाहयाम्यतनुखेदकरम्बितानि॥ ४४॥

राधिका—(सलीलमपक्रम्य। साङ्गुलितर्जनम्।) पामरि, सुमरिस्ससि ओसरे। ता एसा घरं गच्छन्ती जिम्हाणं तुम्हाणं हत्थादो अप्पाणं मोआवइस्सम्।

ललिता—(पटाञ्चलमाकृष्य।) सेहि राहि, याहि न घरं परहत्थे पत्थिदम्हि णिअहंसे। अइ बहिरे, हिरण्णं देसि। कुदो अञ्चले गण्ठिम्।

राधिका—मुञ्च मुञ्चाञ्चलम्। इदो गदुअ अज्जिअं विण्णविस्सम्।

(नेपथ्ये।)

हॅन्त णत्तिणि ललिदे, कहिं दे पिअसही राहिआ।

ललिता—हॅन्त, एसा अज्जिआ मुहरा इध ज्जेव आअच्छदि।

कृष्णः—(सशङ्कम्।) ततो दवीयान्भवामि। (इति तथा स्थितः।)

---

१ पामरि, स्मरिष्यस्यवसरे। तदहं गृहं गच्छन्ती कुटिलीनां युष्माकं हस्तत आत्मानं मोचयिष्यामि।

२ सखि राधे, याहि न गृहं परहस्ते प्रस्थितास्मि निजहंसे। अयि बधिरे, हिरण्यं ददासि। कथमञ्चले ग्रन्थिम्।

३ मुञ्च मुञ्चाञ्चलम्। इतो गत्वार्यां विज्ञापयिष्यामि।

४ हन्त नप्त्रि ललिते, कुत्र तव प्रियसखी राधिका।

५ हन्त, एषा आर्या मुखरा इत एव आगच्छति।

---

त्यादि। लङ्गिमतराङ्गि हे मनोहराङ्गि॥ नेपथ्ये रङ्गभूमौ॥ तत इति। दवी-

(प्रविश्य ।)

**मुखरा**—(पुरो दृष्टिं निक्षिप्य साशङ्कमात्मगतम् ।) [1]जो क्खु दूरदो कोवि णीलिमपुञ्जो मरगअत्थम्भं विडम्बन्तो दिट्ठिं मे आअड्ढइ, णूणं सो एसो कण्हो भवे । जं अउरुव्वं किं पि सोरब्भं पसप्पइ । (इति कृष्णान्तिकमनुसर्पति ।)

**कृष्णः**—आर्ये–(इत्यर्धोक्ते ।)

**मुखरा**—(सकपटाक्रोशम् ।) [2]को क्खु अज्जेति खुलखुलवेदि ।

**कृष्णः**—आर्ये मुखरे, सुखं वर्धसे ।

**मुखरा**—मोहॅण[3], जाव तुह वंसिआए मुअत्तणं ण संवुत्तं ताव कुदो अम्हाणं सुहम् ।

**कृष्णः**—आर्ये, किं तेऽपराध्यति वंशी ।

**मुखरा**—पुॅच्छ[4] इमाओ सव्वगोउलबालिआओ जाओ कण्णसीमं पविसत्तम्मि वंसिआफुक्काराम्भे वारंवारं णिवारिज्जन्तीओ वि वणे धावन्ति ।

**कृष्णः**—(विहस्य ।) मुखरे, सत्यं यथार्थनामासि ।

**मुखरा**—मोहॅण[5], पदोसे तुज्झ एत्थ पवेसो मं सङ्काउलं करेदि ।

---

१ यः खलु दूरतः कोऽपि नीलिमपुञ्जो मरकतस्तम्भं विडम्बयन्दृष्टिं मे आकर्षति, नूनं स एष कृष्णो भवेत् । यदपूर्वं किमपि सौरभ्यं प्रसर्पति ।

२ कः खल्वार्येति खुडखुडायते ।

३ मोहन, यावत्तव वंशिकाया मुग्धत्वं(मूकत्वं) न संवृत्तं तावत्कुतोऽस्माकं सुखम् ।

४ पृच्छ इमाः सर्वगोकुलबालिका याः कर्णसीमां प्रविशति वंशिकाफूत्काराम्भे वारंवारं निवार्यमाणा अपि वने धावन्ति ।

५ मोहन, प्रदोषे तवात्र प्रवेशो मां शङ्काकुलां करोति ।

---

1. सेष इत्यर्थः.

कृष्णः—मुखरे, कृतमत्र शङ्कया । यदद्य पौर्णमास्या मे वर्णितं तदात्र चत्वराङ्के चङ्क्रमीति काप्यद्भुता हरिणीति ।

मुखरा—णाअर, पहादे पेच्छिस्ससि । णं दाणिं साहेहि ।

कृष्णः—हन्त वृद्धे गड्डुरविषाणकठोरे, विश्रब्धमास्यताम् । एषोऽहं व्रजामि । (इति शाखिनामन्तर्दधाति ।)

मुखरा—ललिदे, सच्चं गदो कण्हो ।

ललिता—अध इम् ।

कृष्णः—(स्वगतम् ।) घूर्णाकुलेयं जरती । तदत्र तूष्णीमेत्य राधापटमाकर्षयामि । (इति तथा करोति ।)

मुखरा—(चक्षुषी विकास्य साक्रोशम् ।) धेट्ठि ललिदे, अग्गदो एसो पीदम्बरो कण्हो राहीसाडिअञ्चलं आअड्ढन्तो विअ दीसइ । ता कीस तुमं मं पदावेसि ।

(कृष्णः सशङ्कं किंचिदपसर्पति ।)

ललिता—(स्वगतम् ।) रत्तिअन्धिअं णं वुड्ढिअं वञ्चेमि । (प्रकाशम् । संरम्भमभिनीय । संस्कृतेन ।)

---

१ नागर, प्रभाते प्रेक्षिष्यसे । एनामिदानीं साधय ।

२ ललिते, सत्यं गतः कृष्णः ।

३ अथ किम् ।

४ धृष्टे ललिते, अग्रत एष पीताम्बरः कृष्णो राधाशाटिकाञ्चलमाकर्षन्निव दृश्यते । तत्कथं त्वं मां प्रतारयसि ।

५ रात्र्यन्धामेनां वृद्धां वञ्चयामि ।

---

यान् दूरतः ॥ कःखल्वित्यादि । खुडखुडायते इत्यव्यक्तानुकरणम् ॥ नागर

मुधा शङ्कामन्धे जरति कुरुषे यामुनतटे
तमालोऽयं चामीकरकलितमूलो निवसति।
समीरप्रेङ्खोलादतिचटुलशाखाभुजतया
वयस्याया येन स्तनवसनमास्फालितमभूत्॥ ४५॥

**मुखरा**—(स्वगतम्।) [1]असच्चं ण कहेइ। (प्रकाशम्।) वत्से, घुम्माउलम्हि। ता घरं गदुअ सुविस्सम्। (इति निष्क्रान्ता।)

**विशाखा**—[2]हला राहि, कण्हस्स मुहमण्डलुम्मीलिदं घम्मजलबिन्दुजालं णिअसाडिअअञ्चलेण अवणेहि।

**राधिका**—(सभ्रूभङ्गम्।) [3]विसाहे, तुमं जेव अवणेहि, जा क्खु आकोमारं इमस्सिं वदे गहीददिक्खासि।

**विशाखा**—[4]राधे, कण्ठट्ठिदा दे रङ्गणमालिआ भणादि। मा कुप्प। तुमं वि तह दिक्खाविहाणे कारिज्जन्तसंकप्पासि।

**कृष्णः**—(रङ्गणमालां दृष्ट्वा सश्लाघम्।)

शङ्के चिरात्किमपि रङ्गणपुष्पसङ्घः
पुण्यं पुरा परमतीर्थवरे व्यधत्त।
यस्मान्ममाप्यसुलभे मदिराक्षि साक्षा-
दङ्गीचकार तव वक्षसि सङ्गसौख्यम्॥ ४६॥

---

१ असत्यं न कथयति। वत्से, घूर्णाकुलास्मि। तस्माद्गृहं गत्वा स्वप्स्यामि।
२ हला राधे, कृष्णस्य मुखमण्डलोन्मीलितं घर्मजलबिन्दुजालं निजशाटिकाञ्चलेनापनय।
३ विशाखे, त्वमेवापनय, या खल्वाकौमारमस्मिन्व्रते गृहीतदीक्षासि।
४ राधे, कण्ठस्थिता ते रङ्गणमाला भणति। मा कुप्य। त्वमपि तत्र दीक्षाविधाने कार्यमाणसंकल्पासि।

---

**इति**। साधय याहि॥ **मुधेति**। चामीकरं सुवर्णम्। समीरप्रेङ्खोलात् समीरान्दोलनात्। येन तमालेन॥ किं भणति तत्राह—**मा कुप्य इति**॥ **राधे**

**राधिका**—हला विसाहे, जा क्खु मह कण्ठादो बलेण आअ-ड्ढिअ णीदा तुए अणग्घा गुञ्जाअली सा दाणीं समप्पीअदु । एसा सुक्खा अप्पणो रङ्गणमालिआ गेण्हीअदु ।

**विशाखा**—गोउलाणन्द, गुञ्जाहारकिदे मह कुप्पदि पिअसही ।

**कृष्णः**—राधे, संनिधेहि । तव कण्ठे गुञ्जावलीमादधामि । (इत्युपसर्पति ।)

**राधिका**—(सस्मितमात्मगतम् ।) गुञ्जाहारसमप्पणमिसेण राहिक-ञ्चुअअञ्चलं पउसदि कण्हो ।

(राधिका सभ्रूविक्षेपं परावर्तते ।)

**विशाखा**—हला राहे, जं लद्धुं उक्कण्ठेसि तं किं क्खु लद्धासि ।

**राधिका**—(बिम्बाधरं संदश्य ।) धिट्ठे, चिट्ठ चिट्ठ । (इति लीलारविन्देन ताडयति ।)

**विशाखा**—(विहस्य ।) सँअमासङ्किणि, मा कुप्प । गुञ्जाहारं पुच्छेमि ।

---

१ हला विशाखे, या खलु मम कण्ठतो बलेनाकृष्य नीता त्वयानर्घा गुञ्जावली सेदानीं समर्प्यताम् । एषा शुष्का आत्मनो रङ्गणमाला गृह्यताम् ।

२ गोकुलानन्द, गुञ्जाहारकृते मह्यं कुप्यति प्रियसखी ।

३ गुञ्जाहारसमर्पणमिषेण राधाकञ्चुकाञ्चलं स्पृशति कृष्णः ।

४ हला राधे, यं लब्धुमुत्कण्ठितासि तं किं खलु लब्धासि ।

५ धृष्टे, तिष्ठ तिष्ठ ।

६ स्वयमशङ्किनि, मा कुप्य । गुञ्जाहारं पृच्छामि ।

---

इत्यादि । कार्यमाणः संकल्पो ग्रस्यामिति संकल्पकर्मणः प्राधान्यविवक्षया तद्वाच्यप्रत्ययः, न तु प्रयोज्यकर्मणि । 'ण्यन्ते कर्तुश्च कर्मणः' इति चकारादप्रधाने

कृष्णः—

क तपस्तथा ममास्ते लीलाम्बुजहतिमवाप्नुयां येन ।
मां चञ्चलेन ताडय लोचनकमलाञ्चलेनापि ॥ ४७ ॥

ललिता—

[1]हरिणो समप्पिअ तणुं किविणासि कधं दरावलोअम्मि ।
दिण्णे चिन्तारअणे ण संपुडम्मि ग्गहो जुत्तो ॥ ४८ ॥

राधिका—[2]ललिदे, एवं जप्पन्ती गुरुलोएसु मा क्खु इमं जणं अवरद्धं करेहि ।

विशाखा—[3]सहि, कीस सङ्कसि । णं भअवदी जेव्व एत्थ समाहाणदक्खा ।

ललिता—(सहर्षमात्मगतम् ।) [4]दिट्ठिआ पिअसही हसिदापाङ्गतरङ्गेण कण्हं आलिङ्गदि ।

विशाखा—(संस्कृतेन ।) ललिते, पश्य पश्य ।

शशी व्योमोत्सङ्गं शशिनमभितः कान्तिलहरी
पुरो वृन्दारण्यं सुमुखि सहसा कान्तिलहरीम् ।

---

१ हरये समर्प्य तनुं कृपणासि कथं दरावलोके ।
दत्ते चिन्तारत्ने न संपुटे आग्रहो युक्तः ॥

२ ललिते, एवं जल्पन्ती गुरुलोकेषु मा खल्विदं जनमपराद्धं कुरु ।

३ सखि, कथं शङ्कसे । एनं भगवत्येवात्र समाधानदक्षा ।

४ दिष्ट्या प्रियसखी हसितापाङ्गतरङ्गेण कृष्णमालिङ्गति ।

---

कर्मण्यभिधेये हरप्रधानाद्वृत्तिव्याख्यानात् ॥ शशीत्यादि । शशी व्योमोत्सङ्गं

हरिर्वृन्दारण्यं हरिमपि किलेयं तव सखी
सखीं प्रेम्णः पूरो निजसुषमयामण्डयदयम् ॥ ४९ ॥

**ललिता**—[1]हद्धी हद्धी । विसाहे, पेक्ख ससिकन्तमणिपसूदेहिं जलपूरेहिं सूरपूअणवेईपुरदो किदाइं विलुप्पीअन्ति अलेवणमण्डणाइं । ता एहि । णं पुप्फकेआरिअं णेम्ह ।

(इत्युभे निष्क्रान्ते ।)

**कृष्णः**—प्रिये, नेदानीमपि वाम्याद्विरमस्वे । (इत्यञ्चलं गृह्णाति ।)

**राधिका**—[2]मुञ्चेहि मुञ्चेहि । सहीओ मं आआरेन्ति ।

**कृष्णः**—कठोरे, मय्यत्र माङ्गीकुरु भङ्गुरताम् ।

**राधिका**—(सस्मितम् ।) [3]देइ सरस्सइ, वन्दिज्जसि जं सच्चा जेव्व पअडासि ।

**कृष्णः**—(किंचिद्विहस्य ।)

पद्मिन्यास्ते सुमुखि परमप्रेमसौरभ्यपूरो
दूरोत्सर्पी मदवधि मुदा कृष्णभृङ्गेण भेजे ।
आक्रान्तोऽयं तव नवमुखाम्भोजमाध्वीकपान-
प्रत्याशाभिस्तदवधि रुवन्संभ्रमी बम्भ्रमीति ॥ ५० ॥

---

१ हा धिक् हा धिक् । विशाखे, पश्य शशिकान्तमणिप्रसूतैर्जलपूरैः सूर्यपूजनवेदीपुरतः कृतानि विलुप्यन्त आलेपनमण्डनानि । तदेहि । एतान्पुष्पकेदारिकां नयामः ।

२ मुञ्च मुञ्च । सख्यौ मामाह्वयतः ।

३ देवि सरस्वति, वन्द्यसे यत्सत्यैव प्रकटासि ।

---

निजसुषमया निजपरमशोभया समम्ण्डयद्भूषयामास । तं च शशिनं कान्तिलहरी निजसुषमया इत्यादिपूर्वंपूर्वस्य कर्तुः परपरमपेक्ष्य कर्मत्वम् ॥ कृष्ण इत्यादि ।

किंच।

मुक्तानामुपलभ्यमेव कुचयोः सालोक्यमालोक्य ते
हित्वा संगमहंसमस्तसुहृदां कैवल्यमासेदिवान्।
वैषम्यं तिलमप्यनाश्रितवतोः सान्द्रामृतस्यन्दिभि-
र्मां पूर्णं कुरु तन्वि तूर्णमनयोः सायुज्यदानोत्सवैः॥ ५१॥

(राधिका लज्जते।)

**कृष्णः**—प्रिये, पश्य पश्य।

अपां पत्युः पुष्टीकरणरसपाकः कुमुदिनी-
कदम्बानामङ्गज्वरहरणशीतौषधिघटः।
मृगाङ्कोऽयं कोकीपरिषदभिचाराध्वरधुरा-
पुरोधाः कालिन्दीपरिसरपरिष्कारमकरोत्॥ ५२॥

तदेतां वासन्तिककान्तिमण्डलमण्डितमण्डलस्य चन्द्रमसश्चन्द्रिका-चक्रचुम्बितां विचरावो निकुञ्जचन्द्रशालिकाम्। (इति निष्क्रान्तौ।)

(इति निष्क्रान्ताः सर्वे।)

(इति राधासङ्गो नाम तृतीयोऽङ्कः।)

---

कृष्णमते कठोरे इति संबोधनम्। राधिकामते कठोरे इति सप्तम्यन्तम्॥ **अपामिति**। रसपाको रसायनः। **कोकीति**। चक्रवाकीसमूहकृतमारकयज्ञस्य भारवाहकः पुरोधाः पुरोहितः। चन्द्रिकाचक्रचुम्बितां ज्योत्स्नासमूहयुक्ताम्। विचरावः गच्छावः॥ इति विदग्धमाधवटीकायां तृतीयोऽङ्कः॥

## चतुर्थोऽङ्कः ।

(ततः प्रविशति नान्दीमुखी ।)

**नान्दीमुखी**—[1]भणिदम्हि ललिदाए—'हला णान्दीमुहि, गोमण्डले गोट्ठं पइट्ठे एण्हि कण्हो तुवरन्तो गोअद्धणाहिमुहं पत्थिदो । ता तुमं तत्थ गदुअ सुबलं विण्णवेहि, जधा एसो ओसरे णिअवअस्सस्स राहिआं सुमरावेदि' त्ति । (परिक्रम्य ।) कधं एत्थ पउमा आअच्छइ ।

(प्रविश्य ।)

**पद्मा**—[2]हला णान्दीमुहि, कामं कुसलासि । ता कंपि उवाअं कधेहि जेण उव्विग्गं चन्दाअलीं आसासेमि ।

**नान्दीमुखी**—[3]किं से उव्वेअकालणम् ।

---

१ भणितास्मि ललितया—'सखि नान्दीमुखि, गोमण्डले गोष्ठं प्रविशति सति कृष्णस्त्वरमाणो गोवर्धनाभिमुखं प्रस्थितः । तत्त्वं तत्र गत्वा सुबलं विज्ञापय, यथैषोऽवसरे निजवयस्यस्य राधिकां स्मारयति' इति । कथमत्र पद्मा आगच्छति ।

२ सखि नान्दीमुखि, कामं कुशलासि । तत्कमप्युपायं कथय येनोद्विग्नां चन्द्रावलीमाश्वासयामि ।

३ किमस्या उद्वेगकारणम् ।

---

अथ 'द्वौ स्वपक्षविपक्षौ[ख्यौ] भेदावेव रसप्रदौ' इत्युक्तरीत्या स्वपक्षगतरसं पूर्वरागसंभोगादिभिर्विवृत्य इदानीं विपक्षभेदमाश्रितत्वेन रसविलासं प्रादुर्भावयन् वैशाखपूर्णिमातश्चतुर्थीप्राक्तनसंभूतां लीलां वर्णयति—**ततः प्रविशतीत्यादिना** ॥ **सांप्रतमित्यादि** । सांप्रतं दक्षिणे गोष्ठार्धे इत्यनेनोत्तरगोष्ठार्धसमीपवर्तिन्यां मुखरागृहोपान्तवाटिकायां कर्णिकारकुञ्जादौ यमुनातटवर्तिन्येकस्यां राधायामेवाधि-

**पद्मा**—[1]हला, जाणासि ज्जेव्व तुमं जधा पदोसे सव्वं क्खु गोउलं विब्भमेण कण्हो पच्चहं रञ्जेदि।

**नान्दीमुखी**—[2]अध इम्।

**पद्मा**—[3]संपदं दाव एत्थ दक्खिणे गोट्ठद्धे इमस्स गन्धो वि दुल्लहो।

**नान्दीमुखी**—[4]हला, मा दूणेहि। (संस्कृतेन।)

दृष्टं बिम्बितधातुचित्ररचनं शैब्या ललाटं मया
श्यामाकुन्तलचामरं च विलुठद्वन्यस्रजोड्डामरम्।
गुञ्जाहारलतार्धमञ्जुरधुना भद्राभुजान्तस्तथा
तथ्यं विद्धि स नागरीगुरुरभूद्गोवर्धनस्यातिथिः॥ १॥

---

१ हला, जानास्येव त्वं यथा प्रदोषे सर्वं खलु गोकुलं विभ्रमेण कृष्णः प्रत्यहं रञ्जयति।

२ अथ किम्।

३ सांप्रतं तावदत्र दक्षिणे गोष्ठार्धेऽस्य गन्धोऽपि दुर्लभः।

४ हला, मा दूना भव।

---

कमनुरज्यान्याः कश्चिदप्ययं नानुसंधत्त इत्यभिव्यज्यते। त्वया तत्तु कथं संभवति। यतः—**दृष्टं बिम्बितेत्यादि**। बिम्बिता संलग्ना कृष्णसंबन्धिनी धातुचित्ररचना यत्र तथाभूतं ललाटं विलुठन्त्या अर्थात्कृष्णस्य वन्यस्रजा। उड्डामरमुत्कृष्टम्। भुजान्तं स्कन्धदेशः। गाढालिङ्गनादङ्कितेन गुञ्जाहारलतया अर्धे मञ्जुः मनोहरः। गोवर्धनस्यातिथित्वेन दक्षिणगोष्ठार्धसमीपवर्तिनि गोवर्धनतटादौ बकुलकुञ्जादिष्वपि तस्य अद्य गमनं संभवतीति यस्मादेताश्चन्द्रावलीशैब्याद्या अपि कृष्णेन संमुखा दृष्टास्ततः किमित्यस्यां राधायामेवासक्तोऽयं न तु चन्द्रावल्यामिति व्यञ्जयतीत्यर्थः। तत्र शैब्यायाः स्वपक्षत्वाच्छ्यामायास्तटस्थत्वाद्भद्रायाश्च सुहृत्पक्षत्वादेतासु स्पर्धाभावाच्चन्द्रावल्या न विरोधः। अत एव राधाविशाखाललि-

(नेपथ्ये ।)

कृत्वा वंशीमखिलजगतीगीतसंगीतभङ्गी-
साङ्गीभावप्रथमवसतिं सङ्गिनीं वामपाणौ ।
एष प्रेम्णा व्रजति नयनानन्दनो नन्दसूनु-
र्मन्दं गोवर्धनशिखरिणः कन्दरामन्दिराय ॥ २ ॥

**नान्दीमुखी**—[1]पउमे, तुमं इमिणा वुत्तन्तेण चन्दाअलिअं सुहावेहि । अहं सुअलं अणुसरिस्सम् । (इति निष्क्रान्ता ।)

**पद्मा**—(पुनः पश्यन्ती ।) [2]एसा करालाए अज्जिआए चित्तं अनुवट्टन्ती वणदेअदा वुन्दा चन्दाअलिअं सच्छलं णिवारेदि ।

(नेपथ्ये ।)

किं राधेव दुरन्तमिच्छसि बलादुन्मादमालम्बितुं
मुग्धे मा नय माननीयजरतीवाक्यं बहिर्मा व्रज ।
एष स्मेरविलोचनाञ्चलरुचा चापल्यमुल्लासय-
न्नायाति व्रजसुन्दरीगणमनोमाणिक्यहारी हरिः ॥ ३ ॥

(प्रविश्य ।)

**चन्द्रावली**—(सौत्सुक्यं समन्तादवलोक्य ।) [3]कधं वुन्दाए अलीअं व व्याहरीअदि । कुदो एत्थ कण्हो । (इति खेदं नाटयति ।)

---

१ पद्मे, त्वमनेन वृत्तान्तेन चन्द्रावलीं सुखय । अहं सुबलमनुसरिष्यामि ।

२ एषा करालाया आर्यायाश्चित्तमनुवर्तमाना वनदेवता वृन्दा चन्द्रावलीं सच्छलं निवारयति ।

३ कथं वृन्दयालीकमिव व्याह्रियते । कुतोऽत्र कृष्णः ।

---

तानां तिसृणामनुक्ति······ति पक्षत्वात् ॥ **कृत्वा वंशीमिति** । नेपथ्ये वृन्दाया उक्तिः । वामपार्श्वे सङ्गिनीं वंशीम् । अखिलजगतीषु गीता या संगीतभङ्गी तस्याः साङ्गीभावस्तस्य प्रथमा वसतिर्यस्याम् । तेनान्यत्र प्रायो गीतमङ्गहीनमिति ॥ **एषेति** । कराला चन्द्रावलीमातामही ॥ **किं राधेवेति** । स्पष्टम् । पक्षे मुग्धे

**पद्मा**—(उपसृत्य। संस्कृतेन।)

न संतापं स्वान्ताद्द्रवयसि कथं दावविषमं
घनश्वासैः किं वा मलिनयसि बिम्बाधरमपि।
वनान्तान्केकाभिः सखि शिखरिकक्षे मुखरय-
न्सखीस्थल्याः कल्याण्यभजदुपशल्यं यदुपतिः॥ ४॥

**चन्द्रावली**—(विलोक्य।) [1]कधं पिअसही पउमा। (इति गाढमालिङ्ग्य।) अवि णाम अक्खलिदं भणिदा।

**पद्मा**—[2]अध इम्।

(ततः प्रविशति सुबलेनानुगम्यमानः कृष्णः।)

**कृष्णः**—पश्य पश्य।

अकलिततापस्तरणेरस्तशिरोवीथिभित्तिरोधानात्।
अस्फुटतिमिरविजृम्भः प्रथयति तोयं निशारम्भः॥ ५॥

**सुबलः**—[3]वअस्स, अज्ज गोदोहणं वि अणवेक्खिअ सलालसो वि किंति एत्थ लद्धोसि।

**कृष्णः**—सखे, मयूरं वर्णयता केनचित्प्रियां चन्द्रावलीं स्मारितोऽसि तद्विलोकनाय लालसेयम्।

---

१ कथं प्रियसखी पद्मा। अपि नामास्खलितं भणिता।

२ अथ किम्।

३ वयस्य, अद्य गोदोहनमप्यनपेक्ष्य सलालसोऽपि किमित्यत्र लब्धोऽसि।

---

व्यङ्ग्यमर्थं किंचिदवगच्छन्तीति संबोधनव्यङ्ग्यम्। माननीयजरतीवाक्यं मा नय मा गृहाण। किं वाक्यं तदा राधेव दुरन्तमुन्मादमवलम्बितुं किमिच्छसि तस्मादे मुग्धे मूढे बहिर्मा व्रज इत्येवम्॥ **न संतापमिति**। सखीस्थली चन्द्रावलीग्रामः सखीधरा इति ख्यातस्तस्या उपशल्यं समीपम्। अभजत् प्राप्तवान्॥ **अकलितेति**। तरणेः सूर्यस्य॥ **उन्मदेनेति**। चलचन्द्रकावलीं चलानां

सुबलः—[1]केरिसं मोरवण्णणम् ।

कृष्णः—

उन्मदेन पुरतः शिखण्डिना ताण्डवे पृथुनि मण्डलीकृताम् ।
पश्य निन्दितमहेन्द्रकार्मुकां कृष्णचन्द्रचलचन्द्रकावलीम् ॥ ६ ॥

सुबलः—[2]तदो आअड्ढणं वंशीकलं उल्लासेहि ।

(कृष्णः वक्के वेणुं विन्यस्यति ।)

चन्द्रावली—(निशम्य । सघूर्णम् ।) [3]सव्वदा सुवन्तीवि अस्सुदचरी विअ विम्हावेदि दुम्मुही मुरली ।

कृष्णः—सखे सुबल, अद्य चन्द्रावलीप्रसादे त्वया ममानुकूलेन भवितव्यम् ।

सुबलः—[4]अध इम् ।

पद्मा—[5]हला, पेक्ख । एसो वेणुसण्णाए तुमं तुवरावेदि गोउलेन्दणन्दणो ।

चन्द्रावली—(विलोक्य । संस्कृतेन ।)

सखि मुरलि विशालच्छिद्रजालेन पूर्णा
लघुरतिकठिना त्वं ग्रन्थिला नीरसासि ।

---

१ कीदृशं मयूरवर्णनम् ।

२ तदाकर्षणं वंशीकलमुल्लासय ।

३ सर्वदा श्रूयमाणाप्यश्रुतचरीव विस्मापयति दुर्मुखी मुरली ।

४ अथ किम् ।

५ हला, पश्य । एष वेणुसंज्ञया त्वां त्वरयति गोकुलेन्द्रनन्दनः ।

---

चन्द्रकानामावलीं पङ्क्तिम् ॥ सखीति । लघुर्लाघववती ॥ प्रिये इत्यादि । यातो यामो यासां ता यातयामास्तथाभवन्त्योऽपि न तथा भवन्ति । गच्छन्त्यो

तदपि भजसि शश्वच्चुम्बनानन्दसान्द्रं
हरिकरपरिरम्भं केन पुण्योदयेन ॥ ७ ॥

कृष्णः—(पुरो दृष्ट्वा। सानन्दम्।) सखे, सेयं मम लोचनेन्दीवरचन्द्रिका चन्द्रावली। (इति सादरमुपेत्य।) प्रिये,

चन्द्रस्तव मुखबिम्बं चन्द्रा नखराणि कुण्डले चन्द्रौ।
नवचन्द्रस्तु ललाटं सत्यं चन्द्रावली त्वमसि ॥ ८ ॥

(चन्द्रावली लज्जते।)

कृष्णः—प्रिये, दुष्टदानवदमनाभिनिवेशात्त्वन्मुखचन्द्रमप्रेक्षमाणस्य यातयामा भवन्त्योऽपि न यातयामा भवन्ति ममामूर्यामिन्यः।

चन्द्रावली—[1]सुंन्दर, भमरस्स विअ णवणवाणुसारिणी दे पइदी कधं चिरासङ्गणीरसासु पउमिणीसु अहिरमदु।

कृष्णः—प्रिये चन्द्रावलि, प्रतिपदालोके त्वं सर्वेषां नवनवासि। तदद्य निर्वापय विरहोत्तापं परिष्वङ्गरसेन।

पद्मा—[2]पिअसहीविरहेण कुदो तुम्ह तावुप्पत्ती।

सुबलः—[3]अइ, मा क्खु एव्वं भण। एसो चन्दाअलीविरहेण संतत्तो सीअलाए जलधाराए कच्छे देहं णिक्खिविअ सतिण्णो चओरो विअ णं ज्जेव्व चन्दाअलिअं सव्वदो पेच्छइ वअस्सो।

---

१ सुन्दर, भ्रमरस्येव नवनवानुसारिणी ते प्रकृतिः कथं चिरासङ्गनीरसासु पद्मिनीष्वभिरमताम्।

२ प्रियसखीविरहेण कुतस्तव तापोत्पत्तिः।

३ अयि, मा खल्वेवं भण। एष चन्द्रावलीविरहेण संतप्तः शीतलाया जलधारायाः कच्छे(क्षे) देहं निक्षिप्य सतृष्णश्चकोर इवैतामेव चन्द्रावलीं सर्वतः पश्यति वयस्यः।

---

मा यामिन्यो रात्रयो न गच्छन्तीत्यर्थः॥ प्रतिपदालोके इति। प्रतिपदि

**कृष्णः**—प्रिये, श्रूयताम् ।

विपिनान्तरे मिलन्ती मधुररसा शीतलस्पर्शा ।
अमृतमयी त्वद्विरहे समजनि मम तापनुत्तये राधा ॥ ९ ॥

(इति ससंभ्रमम् ।) धारा धारा ।

**चन्द्रावली**—(साभ्यसूयम् ।) [1]गच्छ । राहं ज्जेव सेवेहि ।

**कृष्णः**—प्रिये, धारेत्यवदम् ।

**चन्द्रावली**—[2]जादं कधं दोणं वण्णाणं विवरीदत्तणम् ।

**कृष्णः**—प्रिये, द्वयोर्वर्णयोः कर्णयोर्वा विपरीतत्वमित्यस्मिन्नस्ति विचारः ।

**चन्द्रावली**—(रोषारुणं मुखमानमय्य ।) [3]अइ दानसौण्ड, अलं एदाए अवहित्थाए । अज्ज अप्पणो मणहारिणो सुवण्णजुअलस्स विण्णासादो साहु माहुरीपूरिदकण्णम्हि किदा ।

**कृष्णः**—

यथार्थेयं वाणी तव चकितसारङ्गनयने
सुवर्णालंकारो मधुरयति यच्चे श्रुतियुगम् ।

---

१ गच्छ । राधामेव सेवस्व ।

२ जातं कथं द्वयोर्वर्णयोर्विपरीतत्वम् ।

३ अयि दानशौण्ड, अलमेतयावहित्थया । अद्यात्मनो मनोहारिणः सुवर्णयुगलस्य विन्यासात्साधु माधुरीपूरितकर्णास्मि कृता ।

---

त्रिधावालोके प्रतिक्षणालोके च ॥ **विपिनेति** । पक्षे मधुरः शृङ्गारः । अन्यत्स्पष्टम् ॥ **अस्ति विचार इति** । कर्णयोर्वैपरीत्येन त्वया राधेति श्रुतमित्यर्थः ॥ **अयीति** । दानशौण्डो दानवीरः । अवहित्था आकारगुप्तिः । सुवर्णयुगलस्य सुवर्णमयकुण्डलयुगलस्य । राधेति सुष्ठुवर्णयुगलस्य चात्मनो मनोहरस्य । माधुरीपूरितेति विरुद्धलक्षणा ॥ **यथार्थेयमिति** । हे चकितसारङ्गनयने हे भीतमृगनयने, सुव-

मुखेन्दोरन्तस्ते बहिरपि सुवर्णच्युतिरियं
मम श्रोत्रद्वन्द्वं नयनयुगलं चाकुलयति ॥ १० ॥

**पद्मा**—हंला, अप्पणो अदिट्ठं सुमरन्ती मा खिज्जेहि। जुत्ता राहाणुरत्तस्स इमस्स राहाणाममयी संकधा।

**चन्द्रावली**—(निश्वस्य।) सेहि पउमे, एवं णेदम्।

**कृष्णः**—प्रिये, बाढमनाशङ्कनीयमेवेदम्। यतः।

तस्य षोडशकलस्य षोडशी वल्लभा स्फुरति या नभस्तले।
राधया सुवदने कथं तया संगतिर्भुवि ममाद्य संभवेत् ॥११॥

**पद्मा**—चैउसट्ठिकलासालिणो दे ण क्खु सावि सोल्हकलस्स वल्लहा दुल्लहा।

**कृष्णः**—(सप्रश्रयं पद्मामवलोक्य।)

चन्द्रावलीवदनपुष्करसङ्गिगण्ड-
चन्द्रावलीकतरतर्ककलङ्किताङ्गौ।

---

१ हला, आत्मनोऽदृष्टं स्मरन्ती मा खिद्यस्व। युक्ता राधानुरक्तस्यास्य राधानाममयी संकथा।

२ सखि पद्मे, एवमेतत्।

३ चतुःषष्टिकलाशालिनस्ते न खलु सापि षोडशकलस्य वल्लभा दुर्लभा।

---

र्णालंकारस्तव श्रुतियुगले तिष्ठत्येव। सुवर्णच्युतिस्तु मामाकुलयति। सा तु मुखेन्दोरन्तर्मध्यान्मम श्रुतियुगलम्। अत्र सुवर्णशब्दः सोल्लुण्ठाक्षरवाची तस्य च्युतिः क्षरणं मुखेन्दोर्बहिश्च गण्डदेशादौ वर्णच्युतिः क्रोधवशात्पीतवर्णस्य च्युतिर्नाशस्तया च गण्डस्थितं रक्तवर्णं मम नयनयुगलं आकुलयति॥ **हलेति**। संकथा संजल्पः॥ **तस्येति**। षोडशकलस्य षोडशी राधा। आकाशस्थया तया सह संगतिर्भुवि स्थितस्य मम कथं संभवेदित्यादिना सैवैका मया ज्ञायतेऽन्या का वा भवतीति भावः॥ सप्रश्रयं सविनयम्॥ **चन्द्रावलीत्यादि**। चन्द्रावलीवदन-

शङ्काकुलोऽत्र कलयन्कमलायताक्षि
शं काकुलोलहृदयः प्रविशामि नाहम् ॥ १२ ॥

चन्द्रावली—(सव्याजप्रसादम् ।) [1]देअ, णं क्खु गोउलजणजीअणभूदस्स दे सव्वसुहकारिदागुणं का क्खु हदबुद्धिआ ण सहदि । ता णिप्फलेण संकोएण मा सादङ्को होहि ।

कृष्णः—(स्वगतम् ।) गरिष्ठामपि मन्युमुद्रां धीरेयं मुखमाधुर्येण निह्नुते । (प्रकाशम् ।) प्रिये, कृतमनेन गौरवविशेषोद्गारेण । रोषोक्तिमाध्वीकमेव वरं वरिष्ठम् ।

चन्द्रावली—[2]गोउलाणन्द, तुम्ह पुरदो मुहं दंसेदुं ण पहवामि । जं पगब्भं वाहरन्ती अवरद्धम्हि ता घरं गमिस्सम् ।

कृष्णः—(सानुनयम् ।) प्रिये, प्रसीद प्रसीद । बद्धोऽयमञ्जलिः ।

चन्द्रावली—[3]सुहअ, उज्जुअं विआहरन्तीं कीस मां अलीअं संकसि । ता अणुजाणेहि मं भद्दआलीदंसणस्स । (इति पद्मया सह निष्क्रान्ता ।)

---

१ देव, नूनं खलु गोकुलजनजीवनभूतस्य तव सर्वशुभकारितागुणं का खलु हतबुद्धिर्न सहते । तस्मान्निष्फलेन संकोचेन मा सातङ्को भव ।

२ गोकुलानन्द, तव पुरतो मुखं दर्शयितुं न प्रभवामि । यत्प्रगल्भं व्याहरन्त्यपराद्धास्मि तस्माद्गृहं गमिष्यामि ।

३ सुभग, ऋजु व्याहरन्तीं किं मामलीकं शङ्कसे । तदनुज्ञापय मां भद्रकालीदर्शनार्थम् ।

---

मेव पुष्करमाकारो तत्सङ्गिनौ गण्डचन्द्रौ । कलयन् पश्यन् सन् । शं कल्याणम् । न प्रविशामि नोपलभे । कीदृशौ । अलीकतरतर्केण कलङ्कितमङ्गं ययोः । अहं कीदृशः । अत्र शङ्काकुलः । पुनः कीदृशः । काका दैन्येन लोलं हृदयं यस्य ॥

**कृष्णः**—सखे, महानुभावामेतां मच्चित्तमहाकाशचन्द्रावलीमपि बलीयस्तमःकन्दलीभिरवस्कन्दितामालोक्य निरालोकोऽस्मि ।

**सुबलः**—[1]पिअवअस्स, किंति एव्वं भणासि । सा क्खु अदक्खिणा ण दिट्ठा ।

**कृष्णः**—सखे, बाढं दुरूहा महीयसां प्रकृतिः । तथेदानीम्

न्यविशत नयनान्ते कापि सारल्यनिष्ठा
वचसि च विनयेन स्तोत्रभङ्गी न्यवात्सीत् ।
अजनि च मयि भूयान्संभ्रमस्तेन तस्या
व्यवृणुत हृदि मन्युं सुष्ठु दाक्षिण्यमेव ॥ १३ ॥

तदेहि मनोहारिणि, तस्मिन्केशरकुञ्जे निविश्य चन्द्रावलीसंगमोपायमङ्गीकरोमि । (इति परिक्रम्य ।) सखे, सेयं बकुलावलिमञ्जुला निकुञ्जवीथी । पश्य पश्य ।

स्फुरति सरो दक्षिणतः सव्ये वापी समन्ततः कुल्याः ।
इति केशराटवीयं प्रमदं नीराधिका कुरुते ॥ १४ ॥

**सुबलः**—(स्वगतम् ।) [2]लद्धो मए ओसरो । (प्रकाशम् ।) वअस्स, सराहिआ ज्जेव तुह पमदं कुरइ किंति णीराहिआ त्ति भणासि ।

---

१ प्रियवयस्य, किमित्येवं भणसि । सा खल्वदक्षिणा न दृष्टा ।

२ लब्धो मयावसरः । वयस्य, सराधिकैव तव प्रमदं करोति । किमिति नीराधिकेति भणसि ।

---

**मच्चित्तेति** । मच्चित्तरूपाकाशे चन्द्रावलीस्वरूपामिव चन्द्रावलीम् । मानरूपतमःकन्दलीभी राहुसमूहैः । अवस्कन्दितामावृताम् ॥ **स्फुरतीति** । केशरस्य बकुलवृक्षस्याटवी । कीदृशी । नीराधिका नीरेणाधिका । 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः ॥ प्रमदमानन्दम् ॥ **लद्धो इति** । शब्दार्थस्यान्यथापरिकल्पनेन राधिका-

**कृष्णः**—(सुबलमालिङ्ग्य ।) सखे, सत्यं ब्रवीषि । तदद्य राधिका यथेमां केशरनिकुञ्जलक्ष्मीमलंकरोति तथा मद्गिरा संदिश्यतां ललिता ।

**सुबलः**—[1]तह त्ति । (इति निष्क्रान्तः ।)

(ततः प्रविशति पद्मा मधुमङ्गलश्च ।)

**मधुमङ्गलः**—[2]पउमे, सुदं मए अज्ज वअस्सेण चाडुआरिणा अणुणीदा वि चन्द्रावली ण पसण्णा ।

**पद्मा**—[3]अध इं ।

**मधुमङ्गलः**—[4]णूणं वअस्सो वि विसण्णं वट्टइ । ता जुत्ता दोणं संगमे अम्हाणं सहआरिदा ।

**पद्मा**—[5]अज्ज, अदो ज्जेव मए अणुसरिदोसि ।

**मधुमङ्गलः**—(पुरो दृष्ट्वा ।) [6]पउमे, पेक्ख एसो पिअवअस्सो छप्पदमेत्तसहाओ केसरकुण्डगे किंपि मन्तेदि ।

**पद्मा**—[7]अज्ज, लदाजालेहिं अन्तरिदा भविअ सुणम्ह किं एसो भणदित्ति ।

(इति तथा स्थितौ ।)

---

१ तथेति ।

२ पद्मे, श्रुतं मयाद्य वयस्येन चाटुकारिणा अनुनीतापि चन्द्रावली न प्रसन्ना ।

३ अथ किम् ।

४ नूनं वयस्योऽपि विषण्णो वर्तते । तद्युक्ता द्वयोः संगम आवयोः सहकारिता ।

५ आर्य, अत एव त्वं मयानुसृतोऽसि ।

६ पद्मे, पश्यैष प्रियवयस्यः षट्पदमात्रसहायः केसरकुञ्जे किमपि मन्त्रयते ।

७ आर्य, लताजालैरन्तरितौ भूत्वा शृणुवः किमसौ भणतीति ।

**कृष्णः**—(राधां स्मरन्। सोत्कण्ठम्।)

प्रसरति यद्भ्रूचापे श्लथज्यमकरोत्स्मरो धनुः पौष्पम्।
मधुरिममणिमञ्जूषा भूयायै मे प्रिया सास्तु॥ १५॥

**मधुमङ्गलः**—[१]पंउमे, एसो उक्कण्ठाए तुज्झ पिअसहीं चेअ वण्णेदि। ता एहि। तुरिअं गदुअ णं समाणेम्ह।

**पद्मा**—[२]अज्ज, सुट्ठु णिट्टङ्किदं सुणम्ह जं बहुवल्लहो एसो।

**कृष्णः**—(पुनः सौत्सुक्यम्।)

सा मुखसुषमा निर्जितराकाचन्द्रा वलीलसन्मध्या।

(इत्यर्धोक्ते।)

**मधुमङ्गलः**—[३]पंउमे, अलं इदं इमादो परेण सुदेण तूण्णं गच्छम्ह।

**पद्मा**—[४]जुत्तं कधेसि।

(इत्युभौ जवेन दूरं परिक्रामतः।)

---

१ पद्मे, एष उत्कण्ठया तव प्रियसखीमेव वर्णयति। तदेहि। त्वरितं गत्वैनां समानयावः।

२ आर्य, सुष्ठु निटङ्कितं श्रृणुवः यद्बहुवल्लभ एषः।

३ पद्मे, अलमिदमितः परेण श्रुतेन तूर्णं गच्छावः।

४ युक्तं कथयसि।

---

मिदानीं स्मारयामीति भावः॥ **प्रसरतीति**। यस्या भ्रूचापे प्रसरति सति कन्दर्पः पौष्पं धनुः श्लथज्यमकरोत्। श्लथा ज्या यत्र तथाभूतम्। एतद्भ्रुवोरग्रे मम सज्जेन धनुषा किं कार्यमित्यर्थः। माधुर्यरूपमणीनां मञ्जूषा पेटिका। सा प्रिया राधिकेति कृष्णहृदयम्, चन्द्रावलीति पद्मामधुमङ्गलयोः॥ **सेति**। सा मुखस्य सुषमा परमा शोभा निर्जितराकाचन्द्रा निःशेषेण जितो राकायाः पौर्णमास्याश्चन्द्रो यया। वलीभिर्लसन्मध्यं यस्याः। राधिकामधिकृत्य कृष्णस्य वर्णनमिदम्। एताभ्यामन्यथा

कृष्णः—

मुहुरा धास्यति राधा मदुरसि रसिका किमात्मानम् ॥ १६ ॥

पद्मा—अंज्ज, एवं भणामि । माणिणीए पिअसहीए सअं समाअमेण लाहवं होदि । ता परावट्टिअ कण्हं विण्णवेहि ।

मधुमङ्गलः—सोहणं मन्तेसि । (इति कृष्णान्तिमासाद्य ।) पिअवअस्स, पच्छण्णेण भविअ सवं दे आअण्णिदं मए उक्कण्ठावअणं । ता आणवेहि । तं ज्जेव तुज्झ वल्लहं तुरिअं समाणेमि ।

कृष्णः—(सश्लाघमालिङ्ग्य ।) सखे, मदनुग्रहेण शीघ्रमानय ।

(मधुमङ्गलः परिक्रम्य पद्मया सह निष्क्रान्तः ।)

कृष्णः—अहो परमोत्कण्ठानां प्रेम्णामुत्कण्ठाकारित्वम् ।

भ्रमरेऽपि गुञ्जति निकुञ्जकोटरे
मनुते मनस्तु मणिनूपुरध्वनिम् ।
अनिलेन चञ्चति तृणाञ्चलेऽपि तां
पुरतः प्रियामुपगतां विशङ्कते ॥ १७ ॥

(ततः प्रविशति पद्मामधुमङ्गलाभ्यां संगता चन्द्रावली ।)

---

१ आर्य, एवं भणामि । मानिन्याः प्रियसख्याः स्वयं समागमेन लाघवं भवति । तत्परावृत्य कृष्णं विज्ञापय ।

२ शोभनं मन्त्रयसि । प्रियवयस्य, प्रच्छन्नेन भूत्वा सर्वं ते आकर्णितं मयोत्कण्ठावचनम् । तदाज्ञापय । तामेव तव वल्लभां त्वरितं समानयामि ।

---

ज्ञातम् । सा चन्द्रावली कीदृशी । मुखसुषमानिर्जितराका । चन्द्रावलीति नाम गृहीत्वा वर्णयति । कोऽत्र संदेह इति भावः । यस्या मुखसुषमा तथाभूता वर्णितलक्षणा सा राधा मदुरसि किमात्मानं धास्यति इतीदमुत्तरार्धं दूरगमनेनैताभ्यां न श्रुतम् ॥ राधामित्यवगम्य कृष्ण आह—**सखे इति** ॥ **भ्रमरेऽपीति** । अनि-

चन्द्रावली—हॅला पउमे, किं एसो बउलकुण्डगो दीसइ।

पद्मा—अँध इम्। ता तूण्णं एहि। (इति परिक्रामति।)

कृष्णः—(नूपुररवमाकर्ण्य।) हन्त, भूरिशो भ्रामितोऽसि भ्रमरीझङ्कारैः। तदलं वृथा प्रत्युद्गमसंभ्रमेण। (इत्युद्वेगं नाटयन्।)

पुरःफलायामाशायां जनः कामं विडम्ब्यते।
आसन्ने हि घनारम्भे द्विगुणं रौति चातकः॥ १८॥

(पुनरुत्कर्णो भवन्।) कथमभ्यर्णे भूषणशिञ्जितं श्रूयते। (इत्युद्ग्रीविकां दत्वा। ससंभ्रमम्।) सत्यमसौ मिलिता मे प्रेयसी। (इति तरसा चन्द्रावलीपार्श्वमागत्य।)

हृद्भृङ्गजङ्गमलता मङ्गलभा राधिका मयोन्मुदिता।

इत्यर्धोक्ते।)

(चन्द्रावली सेर्ष्यं मधुमङ्गलमालोकते।)

मधुमङ्गलः—सँहि चन्दाअलि, मङ्गलभारेण अधिआसि ति पिअवअस्सो तुमं वण्णेदि।

कृष्णः—(सवैलक्ष्यमात्मगतम्।) हन्त, कथमनेन चन्द्रावलिरेवाभिसारिता। भवतु। बटुनोक्तमेव निर्वाहयामि। (प्रकाशम्।)

सुहृदनुरागवितन्द्रा चन्द्रावलिरङ्गसालम्भि॥ १९॥

---

१ हला पद्मे, किमेष बकुलकुञ्जो दृश्यते।

२ अथ किम्। तत्तूर्णमेहि।

३ सखि चन्द्रावलि, मङ्गलभारेणाधिकासीति प्रियवयस्यस्त्वां वर्णयति।

---

केन तृणावले चञ्चति सति॥ पुर इति। पुरः अग्रे निकटमेव फलं यस्यास्तथाभूतायामाशायां सत्याम्। हृदिति। मङ्गला भा कान्तिर्यस्याः सा राधिका। उत्कर्षेणाधिक्येन। मुदिता आनन्दिता। मया उपलब्धेत्यादिकमुत्तरार्धं वर्णयितव्यत्वेन यावन्मनसि भावितमास्ते तावच्चन्द्रावली सेर्ष्यमित्यादि॥ सवैलक्ष्यं सविस्मयम्॥

(चन्द्रावली सलज्जं कृष्णकण्ठे वैजयन्तीं विन्यस्यति ।)

**कृष्णः**—(सानन्दम् ।)

एकं प्रयाति परिचर्य चकोरराजी
चन्द्रं प्रिये निजमनोरथपूरपूर्तिम् ।
चन्द्रावली किमु ममाक्षिचकोरयोस्त्वं
प्रीतिं द्वयोरपि न धास्यसि सेव्यमाना ॥ २० ॥

**मधुमङ्गलः**—(सगर्वम् ।) [1]भो वअस्स, दिट्ठा तुए मज्झ विलक्खणविअक्खणदा। जो क्खु अणन्तगुणसालिणावि तुए मोआइदुं ण पारिदो सो पिअसहीए माणगण्ठी णअगुणधारिणा मए मोआविदो ।

**कृष्णः**—वयस्य, त्वमुद्दण्डकुसुमकोदण्डविलासषाड्गुण्ये महासांधिविग्रहिकोऽसि ।

**पद्मा**—[2]अज्ज, पुरो पफुल्लाइं मल्लीपुप्फाइं पप्फुरन्ति । ता एहि । इमाइं गेण्हम्ह ।

(इत्युभौ निष्क्रान्तौ ।)

**कृष्णः**—(स्वगतम् ।) कुञ्जेऽस्मिन्नागतमात्रां राधां तर्कयामि ।

---

१ भो वयस्य, दृष्टा त्वया मम विलक्षणविचक्षणता । यः खल्वनन्तगुणशालिनापि त्वया मोचयितुं न पारितः स प्रियसख्या मानग्रन्थिर्नवगुणधारिणा मया मोचितः ।

२ आर्य, पुरः प्रफुल्लानि मल्लीपुष्पाणि प्रस्फुरन्ति । तदेहि । इमानि गृह्णीव ।

---

**एकमित्यादि** । चकोरराजी चन्द्रं परिचर्य मनोरथपूराणां पूर्तिं प्रयाति प्राप्नोति । त्वं चन्द्रावली चन्द्रश्रेणी ममाक्षिचकोरौ द्वावेव अतस्तयोः प्रीतिं कथं न धास्यसि । अत्र नाश्चर्यमिति भावः ॥ **त्वमित्यादि** । 'संधिर्ना विग्रहो यानमासनं द्वैधमा-

तदन्यतः प्रस्थास्ये । (प्रकाशम् ।) प्रिये, पुरस्तान्नातिदूरे नागररङ्गोचिता नागकेसराटवी । तदत्रैवानुसरावः ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशति ललितया सह संकथयन्ती राधा ।)

**राधा**—हॅला, पेक्ख पेक्ख । अन्धआरेहिं घोलिदं सव्वं दिसामुहम् ।

**ललिता**—पिॅअसहि, तिमिराहिसारोचिदेहिं सालमप्पसाहणेहिं मण्डिदो तुए किं क्खु अप्पा ।

**राधिका**—अॅध इम् ।

**ललिता**—(विलोक्य । सस्मितम् । संस्कृतेन ।)

धम्मिल्लोपरि नीलरत्नरचितो हारस्त्वया रोपितो
विन्यस्तः कुचकुम्भयोः कुवलयश्रेणीकृतो गर्भगः ।
अङ्गे कल्पितमञ्जनं विनिहिता कस्तूरिका नेत्रयोः
कंसारेरभिसारसंभ्रमभरान्मंन्ये जगद्विस्मृतम् ॥ २१ ॥

**राधिका**—हॅला, मुञ्चेहि परिहासं । तुरिअं उद्देसेहि केसरकुण्डगमग्गम् ।

---

१ हला, पश्य पश्य । अन्धकारैर्घोरितं सर्वं दिङ्मुखम् ।

२ प्रियसखि, तिमिराभिसारोचितैः श्यामलप्रसाधनैर्मण्डितस्त्वया किं खल्वात्मा ।

३ अथ किम् ।

४ हला, मुञ्च परिहासम् । त्वरितमुद्दिश केशरकुञ्जमार्गम् ।

---

श्रयः' इति षड्गुणाः । षाड्गुणा एव षाड्गुण्यम् । चातुर्वर्ण्यादित्वात्ष्यञ् । षाड्गुण्ये षट्सु गुणेषु मध्ये संधिविग्रहयोर्नियुक्तः सांधिविग्रहिकः स चासौ महांश्चेति तथा। भवता संधिः कथं दुष्करो भवतीति भावः ॥ तयोर्विलासौत्सुक्यमवधार्य मधुमङ्गलं विप्रकर्षयन्त्या पद्मया छलेन स्वयं वियुज्यते ॥ **धम्मिल्लोपरीति** । कुचकुम्भयोरुचित इत्यर्थः । **अङ्गे इति** । नेत्रयोरुचितमित्यर्थः । **नेत्रयोरिति** । अङ्ग उचित

**ललिता**—ईदो इदो पिअसही ।¹ (इति परिक्रामन्ती सशङ्कम् । संस्कृतेन ।)

तिमिरमसिभिः संवीताङ्ग्यः कदम्बवनान्तरे
　सखि मुररिपुं पुण्यात्मानः सरन्त्यभिसारिकाः ।
तव तु परितो विद्युद्वर्णास्तनुद्युतिसूचयो
　हरि हरि घनध्वान्तान्येताः स्ववैरिणि भिन्दते ॥ २२ ॥

**राधिका**—अलं इमिणा उवालम्भेण । पेक्ख पच्चासण्णो बउलकुण्डगो ।² (इति संभ्रमादुपसृत्य सपरामर्षम् । संस्कृतेन ।)

विदूरान्न घ्राणं मदयति मुरारेः परिमलो
　न कुञ्जोऽयं तस्य स्फुरति नखरद्योतिनिकरैः ।
ततः शङ्के कस्मिन्नपि रहसि वल्लीवलयिते
　परीहासाकाङ्क्षी प्रियसखि निलीनस्तव सखा ॥ २३ ॥

**ललिता**—हला, एहि । वामदो कदम्बकुण्डगं विइणम्ह ।³

**राधिका**—(तथा कुर्वती ।) अइ छइल्ल, दिट्ठोसि दिट्ठोसि । कीस अङ्गेहिं अङ्गाइं संगोवेसि ।⁴ (इति समन्तान्मृगयति ।)

---

१ इत इतः प्रियसखी ।
२ अलमनेनोपालम्भेन । पश्य प्रत्यासन्नो बकुलकुञ्जः ।
३ हला, एहि । वामतः कदम्बकुञ्जं विचिन्मः ।
४ अयि विदग्ध, दृष्टोऽसि दृष्टोऽसि । कस्मादङ्गैरङ्गानि संगोपयसि ।

---

इत्यर्थः ॥ **तिमिरेत्यादि** । तिमिरमेव मषिर्लेपनयोग्यं दलिताञ्जनं तया संवीताङ्ग्यः सरन्ति व्रजन्ति । तव तु वैपरीत्यमित्याह । तनुद्युतय एव सूचयो घनध्वान्ता भिन्दते स्फोटयन्ति । तेन तनुद्युतीनां नीलाम्बरावृतत्वेऽपि तन्तूपान्तसूक्ष्मसूक्ष्मरन्ध्रेभ्यो निर्गच्छन्तीनामप्यत्यौज्वल्यं ध्वान्तानामपि सूचीवेधयोग्यत्वेनातिगाढत्वं व्यञ्जितम् । हे स्ववैरिणि, स्वस्य आत्मनो वैरिणी स्वयमेव त्वं, एतास्तु

**ललिता**—सेहि, मुञ्च मग्गणग्गहम् । एहि । केलिकुण्डगकप्पणं कुणम्ह ।

**राधिका**—(संस्कृतेन ।)

रचय बकुलपुष्पैस्तोरणं केलिकुञ्जे
कुरु वरमरविन्दैस्तल्पमिन्दीवराक्षि ।
उपनय शयनान्तं साधु माध्वीकपात्रीं
सहचरि हरिरद्य श्लाघतां कौशलं ते ॥ २४ ॥

**ललिता**—(तथा कृत्वा ।) हेला, पेक्ख । कण्हो विलम्बेदि । ता कुञ्जं पविसिअ णं पडिवालेम्ह ।

**राधिका**—(परिक्रम्य । उद्वेगं नाटयन्ती । संस्कृतेन ।)

रुद्धः कापि सखीहितार्थपरया शङ्के हरिः पद्मया
प्राप्तः कुञ्जगृहं यदेष न तमीयामेऽप्यतिक्रामति ।
पौलोमीरतिबन्धुदिङ्मुखमसौ हा हन्त संतर्पय-
न्नुन्मीलत्यभिसारलुब्धरमणीगोत्रस्य शत्रुः शशी ॥ २५ ॥

(इत्युभे निष्क्रान्ते ।)

(ततः प्रविशति कृष्णः ।)

**कृष्णः**—(समन्तादवलोक्य ।)

आसङ्गः कुमुदाकरेषु शिथिलो भृङ्गावलीनामभू-
द्वीक्षन्ते निजकोटराङ्कितममी क्षोणीरुहं कौशिकाः ।

---

१ सखि, मुञ्च मार्गणाग्रहम् । एहि । केलिकुञ्जकल्पनं कुर्मः ।

२ हला, पश्य । कृष्णो विलम्बते । तत्कुञ्जं प्रविश्यैनं प्रतीक्षावहे ।

---

न तथेति व्याजस्तुत्या सर्वतोऽतिविलक्षणं सौन्दर्यं वर्णितमिति । **तमीयामेऽप्यतिक्रामतीति** । तेन वैशाखपौर्णमास्या अन्तरा चतुर्थीतिथिरियमिति गम्यते । पौलोमी शची तस्या रतिबन्धुरिन्द्रस्तस्य दिशः पूर्वस्या मुखं सम्यक्प्रकारेण तर्पयन् । स्वदर्शनस्वकरलालनादिभिरिति भावः । स्वयमिन्द्रनायिकां पूर्वां दिशमभिसरति, अथ चान्यासामभिसारिकाणां शत्रुरित्याश्चर्यम् ॥ **आसङ्ग इति** । निज-

संकोचोन्मुखतां प्रयाति शनकैरौत्तानपादेर्द्युतिः
किं भानुर्ननु पूर्वपर्वततटीमारोढुमुत्कण्ठते ॥ २६ ॥

(इति परिक्रम्य ।) न जाने नवीनविप्रलम्भेन संभृतनिर्भरसंरम्भा किं नाम प्रतिपत्स्यतेऽद्य राधा । (विमृश्य ।) भवतु । केसरेण नागकेसरं प्रतिपादयिष्ये तदमूनि नागकेसराणि विचिनुयामि । (इति तथा कृत्वा पुरोऽनुसर्पन् ।)

कपटी स लताकुटीमिमां सखि नागादधुनापि माधवः ।
इति जल्पपरीतया तया क्रमदीर्घा गमिता कथं तमी ॥ २७ ॥

(परिक्रम्य । बकुलकुञ्जं पश्यन् । सविषादम् ।)

ताम्बूलं घनसारसंस्कृतमदः क्षिप्तं पुरो राधया
हारी हन्त हरिन्मणिस्तबकितो हारोऽयमुत्सारितः ।
पौष्पी चेयमुदारसौरभमयी चूडा नखैः खण्डिता
तस्याः शंसति विप्रलम्भजनितं कुञ्जोऽयमन्तः क्लमम् ॥ २८ ॥

(इत्थमग्रतो गत्वा ।) इयमेव राधायाः सूर्याराधनवेदिका । तदस्याः पार्श्वमासादयामि । (इति परिक्रामति ।)

(ततः प्रविशति सखीभ्यामनुगम्यमाना राधा ।)

---

कोटराङ्कितं क्षोणीरुहं वृक्षं कौशिकाः पेचका वीक्षन्ते । औत्तानपादेर्ध्रुवस्य नक्षत्राकारस्य ॥ **न जाने इति** । नवीनेन विप्रलम्भेन प्रथमवियोगेन संभृतनिर्भरसंरम्भा धृतातिशयकोपा । प्रतिपत्स्यते ज्ञास्यति । मया सुबलद्वारोक्तेन बकुलवाचककेसरपदेनाधुना नागकेसरं प्रतिपादयिष्यति ॥ **ताम्बूलमिति** । घनसारेण कर्पूरेण संस्कृतम् । हारी मनोहारी । हरिन्मणिभिः स्तबकितो गुच्छीकृतो हारः

राधा—(पुरो विलोक्य।) हंला ललिदे, पेक्ख वेइआणेदिट्ठो सो तुज्झ छइल्लो।

ललिता—सैहि, कञ्चणपडिमेव्व कठोरा होहि।

कृष्णः—पुरस्तादेषा सहपरिवारा प्रिया। तदिदमुट्टङ्कयामि। (इत्युपसृत्य।) ललिते, साधु साधु। दृष्टं तव गरिष्ठमत्र दुर्मन्त्रतन्त्रचर्यायामाचार्यत्वम्। यदद्य भवत्या केसरनिकुञ्जवेद्यामहमुज्जागरव्रतदीक्षां परिग्राहितोऽस्मि।

ललिता—(ससंरम्भम्। संस्कृतेन।) अहो वैपरीत्यम्, अहो वैपरीत्यम्।

केसरनिकुञ्जकुहरे कुहक वसन्ती सखी त्वया रहिते।
श्रितनवपल्लवशयना त्रुटिमपि कल्पाधिकां मेने॥ २९॥

कृष्णः—(कपटेनाटोपं नाटयन्।) अहो, दम्भभरारम्भेषु गाम्भीर्यमस्याः। (नागकेसराण्युद्धाट्य दर्शयन्।)

अरतिं मम निशि पश्यन्नकाम्यन्नागकेसरोऽप्यसकृत्।
विगलन्मधुभिः कुसुमैरेभिर्नेत्रैरिवोदस्रैः॥ ३०॥

ललिता—अँम्महे धूत्तत्तणं, जं बउलवाइणा केसरेण दाणिं णागकेसरो विक्खावीअदि।

१ हला ललिते, पश्य वेदिकानेदिष्ठः स तव नागरः।
२ सखि, काञ्चनप्रतिमेव कठोरा भव।
३ अहो धूर्तत्वम्, यद्बकुलवाचिना केसरेणेदानीं नागकेशरो विज्ञाप्यते।

कुञ्ज इत्येतादृशलक्षणविशिष्ट इत्यर्थः॥ हलेति। नेदिष्ठः संनिकृष्टः॥ पुरस्तादित्यादि। दुष्टा मन्त्रा येष्वेवंभूतं यत्तन्त्रं तस्य चर्यायामाचरणे आचार्यत्वम्। उपदेशादिकर्त्रीत्वमित्यर्थः। मनोज्ञादित्वाद्वुञ्॥ आटोपमतिप्रतिभाम्। अरतिमिति। अरतिं खेदम्॥ अम्महे इति। संकेतस्तु केसरकुञ्जे कृतः। स च केसरशब्दो

**कृष्णः**—(सव्याजनिर्वेदम् ।) ललिते, विश्राम्यतु तवेयं शब्दार्थस्यान्यथाकल्पनेन वचनचञ्चुता । अथ वा कस्ते दोषः । दृष्टदोषाभिरपि गौराङ्गीभिः सौहार्दमभिलष्यता मयैवापराद्धम् ।

**विशाखा**—[1]को क्खु गोरङ्गीणं दिट्ठो तुए दोसो ।

**कृष्णः**—पश्य पश्य ।

नवरसधारिणि मधुरे धरणीसंतापहारिविस्फुरणे ।
विदधति न कृष्णमुदिरे गौर्यः क्षणरोचिषः स्थैर्यम् ॥ २१ ॥

**विशाखा**—[2]तस्सिं कुलिसकूडकठोरचेट्ठिदे ताणं कोमलाणं जुत्ता ज्जेव तधा पउत्ती ।

---

१ कः खलु गौराङ्गीणां दृष्टस्त्वया दोषः ।

२ तस्मिन्कुलिशकूटकठोरचेष्टिते तासां कोमलानां युक्ता एव तथा प्रवृत्तिः।

---

बकुलवाची । 'अथ केसरो बकुलः' इत्यभिधानप्रसिद्धेः । नागकेसरे तु प्रसिद्ध्यभावादिति ललिताभिप्रायः ॥ 'चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यभिधाने स्वरूपवैरूप्याभावेनैव वृत्तेस्तथाशब्दार्थस्येति 'भीमसेनो भीमः, सत्यभामा भामा' इति न्यायेन केसरशब्दस्यार्थो नागकेसर एव तत्कुञ्ज एव मयाभिप्रेतः । भवत्या तु बकुलकुञ्ज इत्यन्यथार्थकल्पनेन मद्वचनमेव क्रियते । तेनैव त्वं ख्यातासीत्यर्थः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चञ्चुप्प्रत्ययः । गौराङ्गीभिः सौहार्दमभिलष्यता मयैवापराधः कृत इत्यर्थः ॥ **नवेत्यादि** । नवरसधारिणि अभिनवजलधारिणि । पक्षे 'शान्तोऽपि नवमो रसः' इति रीत्या शृङ्गारादिनवरसाश्रये कृष्णवर्णे मुदिरे मेघे । पक्षे कृष्णोऽयं मुदिर इवेति व्याघ्रादित्वात्समासः । क्षणरोचिषो विद्युतः । पक्षे क्षणमात्रा रोचिः कान्तिर्यासाम् । तदानीमेव महाननुरागस्तदानीमेव विरागेण वैपरीत्यमिति भावः । अत्र गौर्य इति विशेषणपदं विशेष्यपदं च ॥ **तस्मिन्निति** । तथा प्रवृत्तिर्विद्युदिव प्रवृत्तिरित्यर्थः । वज्रस्य यथा क्षेपणादिरूपकठोरचेष्टा तत्तुल्यचेष्टिते

ललिता—विसाहे, सुणाहि कंपि गाहम्। (इति भृङ्गं दर्शयन्ती।)

चम्पअलदं सिणिद्धं णअकञ्चणकन्तिकुसुमगोरङ्गी।
मुक्किअ धावइ भमरो चवला चिअ सामला होन्ति॥ ३२॥

कृष्णः—(स्मित्वा।) सत्यं वाग्मिनामसि राज्ञी।

ललिता—(अपवार्य।) सुट्ठु णीसङ्केण वअणाडोवेण अणवरद्धं ज्जेव णं तक्केमि।

कृष्णः—

वाम्याद्भवेन्न विरतिर्नवयौवनानां
वामभ्रुवामिति जनश्रुतिरव्यलीका।
चाटूनि कर्तुमुचितानि विमुच्य खिन्नं
मां प्रत्युताद्य यदमूरपरं जयन्ति॥ ३३॥

ललिता—(अपवार्य।) हला, सच्चं उज्जाअरखिन्नो कण्हो। ता पसीद।

राधिका—(कृष्णमपाङ्गेनावलोक्य।) मुद्धाणं वञ्चणकलाविअद्धोसि।

कृष्णः—(सानन्दम्।) फुल्लकेसरकलापेनामुना धम्मिल्लश्रीस्तवालंक्रियताम्। वन्ध्यतां मा विन्दतु मम प्रयासः। (इति पुटिकामुद्घाट्य।)

---

१ विशाखे, शृणु कामपि गाथाम्।

चम्पकलतां स्निग्धां नवकाञ्चनकान्तिकुसुमगौराङ्गीम्।
त्यक्त्वा धावति भ्रमरश्चपला इव श्यामला भवन्ति॥

२ सुष्ठु निःशङ्केन वचनाटोपेनानपराद्धमेवैनं तर्कयामि।

३ हला, सत्यमुज्जागरखिन्नः कृष्णः। तत्प्रसीद।

४ मुग्धानां वञ्चनकलाविदग्धोऽसि।

---

स्वीयत्वर्थः॥ वाम्यादित्यादि। कर्तुमुचितानि चाटूनि विमुच्य त्यक्त्वा प्रत्युत

प्रिये, पश्यामूनि सुगन्धीनामग्रेसराणि केसराणि यैरहं सद्यः सुवासितोऽस्मि ।

राधिका—(सनर्मस्मितम् ।) [1]णूणं चन्दाअलीपरिमलेण वासिदोसि तुमम् ।

कृष्णः—प्रिये, पारिहासिकान्यपि ते वचांसि न कदाचिदपि व्यभिचरन्ति । यदद्य मदङ्गतश्चन्द्रावलीसौरभ्यमुदञ्चति ।

राधिका—(सेर्ष्यं परावृत्य ।) [2]ललिदे, किं मुद्दिदकण्णासि ।

कृष्णः—(स्मित्वा ।) प्रिये, कथमक्षरसाम्यादक्षमासि । यदहं कर्पूरावलीं वर्णयामि ।

राधिका—(सस्मितम् ।) [3]समप्पेहि पुप्फाइं । (इति पटाञ्चलं प्रसारयति ।)

कृष्णः—(राधामुखं प्रेक्ष्य । स्वगतम् ।) हन्त, विभ्रममण्डितस्य चिल्लीकोदण्डस्य ताण्डवकला ।

विशाखा—(जनान्तिकम् ।) [4]ललिदे, पेक्ख पेक्ख । संमोहणेण राहीए कडक्खवाणेण लक्खीकिदो पुप्फपुडिआए सद्धं अञ्चले दिण्णंपि वेणुं ण जाणादि कण्हो ।

---

१ नूनं चन्द्रावलीपरिमलेन वासितोऽसि त्वम् ।

२ ललिते, किं मुद्रितकर्णासि ।

३ समर्पय पुष्पाणि ।

४ ललिते, पश्य पश्य । संमोहनेन राधायाः कटाक्षबाणेन लक्षीकृतः पुष्पपुटिकया सार्धमञ्चले दत्तमपि वेणुं न जानाति कृष्णः ।

---

मामपरं जयन्ति दुःखयन्ति । कटु वदन्तीत्यर्थः ॥ सनर्मस्मितमिति मिथ्यादोषारोपणात् ॥ राधामुखं प्रेक्ष्येत्यादि । चिल्लीकोदण्डस्य भ्रूधनुषः ॥ संमोहने-

ललिता—(संस्कृतेन ।)

निद्रागमेऽपि सखि नन्दसुतस्य हर्तुं
यां शक्नुवन्ति न पराः पशुपालबालाः ।
धन्या कटाक्षकलया किल मोहयन्ती
तां राधिकाद्य पुरतो मुरलीं जहार ॥ ३४ ॥

राधिका—(अपवार्य । संस्कृतेन ।)

या निर्माति निकेतकर्मरचनारम्भे करस्तम्भनं
रात्रौ हन्त करोति कर्षणविधिं या पत्युरङ्कादपि ।
गौरीणां कुरुते गुरोरपि पुरो या नीविविध्वंसनं
धूर्ता गोकुलमङ्गलस्य मुरली सेयं ममाभूद्दशा ॥ ३५ ॥

(नेपथ्ये ।)

अरे कुरङ्गा, दिट्ठो तुम्हेहिं पिअवअस्सो ।

कृष्णः—कथं मिलत्येष मधुमङ्गलः ।

(प्रविश्य माल्यहस्तः ।)

मधुमङ्गलः—सुदं सुबलमुहादो जं अज्ज णिउञ्जमज्झे राहिआ जागरिदा आसी । ता गदुअ णं पोच्छाहइस्सम् । (इत्युपसृत्य । संस्कृतेन ।)

अविरलवनमालालंकृतस्निग्धमूर्तिः
स्फुरितकटककान्तिर्धातुभिर्मण्डिताङ्गः ।

---

१ अरे कुरङ्गाः, दृष्टो युष्माभिः प्रियवयस्यः ।
२ श्रुतं सुबलमुखाद्यदद्य निकुञ्जमध्ये राधिका जागरितासीत् । तद्गत्वैनां प्रोत्साहयिष्यामि ।

---

नेत्यादि । वशीकृतः । विद्ध इत्यर्थः ॥ अविरलेति । अविरलया वनमालया वनश्रेण्या चालंकृता स्निग्धा मूर्तिर्यस्य सः । कटकानां वलयानां नितम्बानां च ।

अखिलभुवनतुङ्गो नेत्रभङ्गया विकृष्टः
कथमिव सखि राधे कृष्णशैलस्त्वयाभूत् ॥ ३६ ॥

(राधिका स्मयते ।)

**कृष्णः**—प्रिये, वेत्ति मे तमस्तमीसंभवं वयस्योऽयम् ।

**राधिका**—अज्ज, दंसिदं अज्ज सिणेहदक्खिणं जं कन्तारसिन्धुसंतारकोसलाइं सिक्खाविदम्हि ।

**मधुमङ्गलः**—सहि, साहु अम्हे उवालहिजम्ह, जेहिं चलन्तीं पि वल्लीं तुमं तक्किअ वणे वसन्तेहिं सादङ्कं जाअरिदम् । तुम्हे क्खु सलाहिज्झइ, जाहिं पिअवअस्ससणाहं पि कुञ्जं अणिव्वन्धेण सुण्णं भणिअ घरे पविसन्तीहिं णिरादङ्कं सुत्तम् ।

**राधिका**—अज्ज, किं एव्वं भणासि । (इति संस्कृतेन ।)

निकुञ्जं कंसारेर्बत नखरचन्द्रावलिरुचि-
च्छटाग्रस्तं नाग्रे मुहुरपि यदा प्रेक्षितमभूत् ।
तदा सद्यः प्रोद्यद्विधुहतकविक्रान्तिहतया
मया लब्धारण्ये क्लमनिवहपूर्णा परिणतिः ॥ ३७ ॥

---

१ आर्य, दर्शितमद्य स्नेहदाक्षिण्यं यत्कान्तारसिन्धुसंतारकौशलानि शिक्षितास्मि ।

२ सखि, साधु वयमुपालभ्यामहे, यैश्चलन्तीमपि वल्लीं त्वां तर्कयित्वा वने वसद्भिः सातङ्कं जागरितम् । यूयं खलु श्लाघ्यध्वे, याभिः प्रियवयस्यसनाथमपि कुञ्जमनिर्बन्धेन शून्यं मत्वा गृहे प्रविशतीभिर्निरातङ्कं सुप्तम् ।

३ आर्य, किमेवं भणसि ।

---

'कटको वलयोऽस्त्रियाम्', 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । धातुभिर्गैरिकाद्यैः ॥ **तमीसंभवमिति** । रात्रावुद्भूतं तमः दुःखम् ॥ **अज्ज दंसिदमिति** । कान्तारः वनभ्रमणादौ दुर्गमवर्त्मजन्यदुःखं तदेव सिन्धुः ॥ **निकुञ्जमिति** । नखरा एव चन्द्रास्तेषामावलिः पङ्क्तिस्तस्या रुचिच्छटाभिर्ग्रस्तं मुहुरपि निकुञ्जं प्रेक्षितं दृष्टं नाभूत् । खरा क्रूरा या चन्द्रावली तस्या रुचिच्छटाग्रस्तं कंसारेः कुञ्जं मुहुरपि वारं-

**मधुमङ्गलः**—[1]अहो, कहं कुडङ्गसंगदा चन्द्राअली वि राहिआए दिट्ठत्थि। ता वञ्चणं मुकिअ णं उक्करिसइस्सम्। (प्रकाशम्। संस्कृतेन।)

क्लान्तेन ते वदनचन्द्रमनाकलय्य
कल्याणि गोकुलपुरंदरनन्दनेन।

चन्द्रावली—

(इत्यर्धोक्ते।)

(कृष्णो भ्रूसंज्ञया निवारयति।)

(सर्वाः परस्परं साकूतमवलोकयन्ति।)

**मधुमङ्गलः**—(स्वगतम्।) [2]हन्त हन्त, किदं मए बम्हणबडुओचिदं चावलम्।

**कृष्णः**—(विभाव्य।) विभावरीभवं मे वरीयः कष्टं बाष्परुद्धकण्ठोऽयं संवृत्तः। तदहमेव वाक्यं समापयामि। (इति स्मित्वा।)

चन्द्रावली न नयनान्ततया किलास्य
सा दृश्यतः कथमपि क्षपिता क्षपेयम्॥ ३८॥

**मधुमङ्गलः**—[3]पिअवअस्स, सव्वण्णोसि। किंति मह हिअअट्ठिदं पज्झट्ठं ण जाणिस्ससि।

---

१ अहो, कथं कुञ्जसंगता चन्द्रावल्यपि राधया दृष्टास्ति। तद्वञ्चनं त्यक्त्वैनामुत्कर्षयिष्यामि।

२ हन्त हन्त, कृतं मया ब्राह्मणबटूचितं चापलम्।

३ प्रियवयस्य, सर्वज्ञोऽसि। किमिति मम हृदयस्थितं पदार्थं न ज्ञास्यसि।

---

वारमपि यदा प्रेक्षितं नाभूत्। अपि तु प्रेक्षितुमेवाभूदित्येवमर्थं निर्धार्य स्वगतं परामृशति—**अहो इत्यादि**। **क्लान्तेनेति**। चन्द्रावली या अलम्भि साप्यातद्दुःखायैवास्याभूदित्युत्तरार्धे विवक्षितम्॥ **विभाव्येति**। विभावरीभवं रात्रिभवम्। वरीयः अतिशयितम्। कष्टं मम। विभाव्य विचिन्त्य। अयं मधुमङ्गलो

ललिता—[1]राहे, अज्ज वि संदिद्धासि । पेक्ख रत्तिविलासपिसुणाइं णाअरस्स चङ्गाइं अङ्गाइं । (इति सेर्ष्यम् । संस्कृतेन ।)

बाले गोकुलयौवतस्तनतटीदत्तार्धनेत्रादितः
कामं श्यामशिलाविलासिहृदयाच्चेतः परावर्तय ।
विद्मः किं न हि यद्विकृष्य कुलजाः केलीभिरेष स्त्रियो
धूर्तः संकुलयन्कलङ्कततिभिर्निःशङ्कमुन्मुञ्चति ॥ ३९ ॥

राधिका—[2]हद्धी हद्धी, सुट्ठु विडम्बिदम्हि ।

कृष्णः—प्रिये, मुधैव मां दूषयसि ।

राधिका—(सोपालम्भम् । संस्कृतेन ।)

मुक्तान्तर्निमिषं मदीयपदवीमालोकमानस्य ते
जाने केसररेणुभिर्निपतितैः शोणीकृते लोचने ।
शीतैः काननवायुभिर्विरचितो बिम्बाधरे च व्रणः
संकोचं त्यज देव दैवहतया न त्वं मया दूष्यसे ॥ ४० ॥

कृष्णः—प्रिये, तवाधीनस्य मे संकोचोऽप्यलंकारायैव ।

---

१ राधे, अद्यापि संदिग्धासि । पश्य रात्रिविलासपिशुनानि नागरस्य चङ्गान्यङ्गानि ।

२ हा धिक् हा धिक्, सुष्ठु विडम्बितास्मि ।

---

बाष्परुद्धकण्ठः संवृत्तः ॥ चन्द्रावलीननयनान्ततयेत्यादितः पठितव्यम् । चन्द्रेऽवलीनो नयनान्तो यस्य तत्तया । अस्य ते वदनचन्द्रस्य । क्षपिता यापिता ॥ 'चङ्गमनोहरे' इत्यमरः । **बाले इति** । श्यामशिलेव विलासिहृदयं यस्य । कलङ्कसमूहैः संकुलयन् व्यापयन् ॥ **मुक्तान्तरित्यादि** । मुक्तं त्यक्तं अन्तर्मध्यनेत्रेऽपि निमिषं यत्र एवं यथा स्यात् । केसररेणुभिरेव न तु संभोगजागरैः । **व्रण इति** ।

**राधिका**—[1]साहीणो सव्वलोअविक्खादोसि । कधं ममाहीणो हुविस्ससि ।

**कृष्णः**—तवाधीनो नाहमेव केवलोऽस्मि । किंतु ते मम दशावताराश्च । तथा हि ।

चञ्चन्मीनविलोचनासि, कमठोत्कृष्टस्तनी संगता,
क्रोडेन स्फुरता तवायमधरः, प्रह्लादसंवर्धनः ।
मध्योऽसौ बलिबन्धनो, मुखरुचा रामास्त्वया निर्जिता,
लेभे श्रीघनताद्य, मानिनि मनस्यङ्गीकृता कल्किता ॥४१॥

**राधिका**—[2]हला ललिदे, आअण्णिदं तुए ।

**ललिता**—[3]कण्ह, तुह ओदारा तुअम्मि ज्जेव वसन्ति, जं एदाणं चिन्हाइं दीसन्ति । (संस्कृतेन ।)

वन्यान्तर्गुरुचापलं, कठिनता, गोसंगतिः, पाणिजे
क्रौर्यं, दम्भरुचिः, सुचण्डिमधुरा, लङ्केशविध्वंसनम् ।

---

१ स्वाधीनः सर्वलोकविख्यातोऽसि । कथं ममाधीनो भविष्यसि ।
२ हला ललिते, आकर्णितं त्वया ।
३ कृष्ण, तवावतारास्त्वय्येव वसन्ति, यदेतेषां चिह्नानि दृश्यन्ते ।

---

न तु प्रियादन्ताघातैरिति ॥ **चञ्चन्मीनेति** । स्फुरता क्रोडेन क्रोडदेशेन संगता । शब्दश्लेषेण क्रोडो वराहः । प्रकर्षेणाह्लादमानन्दम् । पक्षे प्रह्लादं संवर्धयतीति नृसिंहः । बलिं बध्नातीति बलिबन्धनो वामनः, बलिभिस्त्रिवलिभिर्बन्धनं यस्येति च । रामा रमण्यः, शब्दश्लेषेण त्रयो रामाश्च । श्रिया कान्त्या घनता निबिडता च त्वया लेभे, श्रीघनो बुद्धश्च । मनसि कल्किता मालिन्यम् । इदानीं मानावसरे क्रौर्यमित्यर्थः, कल्की चान्तिमोऽवतारः ॥ **वन्यान्तरिति** । वन्यं वनसमूहो जलसमूहश्च तन्मध्ये गुरुचापलमिति मत्स्यलक्षणम् । कठिनतेति कूर्मलक्षणम् । गोसंगतिरिति वराहलक्षणम् । गौः पृथ्वी, पक्षे स्पष्टम् । पाणिजानां नखानां क्रौर्यं तीक्ष्णं हिरण्यकशिपोश्च वक्षःक्षोविदारणेनेति नृसिंहलक्षणम् । दम्भे कापट्यहेतौ

अश्रान्तोन्मदलौल्यमिष्टकदनं, निस्त्रिंशलीलोन्नति-
र्मीनेन्द्राद्यवतारतः स्फुटममी भ्राजन्ति भागास्त्वयि ॥ ४२ ॥

**कृष्णः**—(सस्मितम् ।) सखे, पश्य पश्य ।

ललिताजनि दुर्ललिता बभूव राधा दुराराधा ।
तत्ते मयि न च्छायां शशाक कर्तुं विशाखेयम् ॥ ४३ ॥

(इति बटोः करान्मल्लीदाम गृहीत्वा । सचाटुप्रणामम् ।)

स्रगियमुरुगुणा ते चित्तवीथीव राधे
शुचिरतिसुकुमारी काममामोदनी च ।
नखपदशशिरेखा धाम्नि पुष्णातु कान्तिं
तव कुचशिवमूर्ध्नि स्वर्धुनीविभ्रमेण ॥ ४४ ॥

(इति भ्रूसंज्ञया विशाखामनुकूलयन्माल्यमर्पयति ।)

**विशाखा**—(माल्यं निवेदयन्ती । संस्कृतेन ।)

यस्मिन्नेत्रसरोरुहाङ्गणभुवः प्राप्ते विदूरं मना-
क्सद्यस्ते निमिषोऽपि याति तुलनां तन्वङ्गि मन्वन्तरैः ।

---

रुचिर्यस्येति वामनलक्षणम् । सुष्ठु चण्डिम्नो धूर्भारः । 'ऋक्पूरब्धूः पथामानक्षे' इत्यकारसमासान्तात् ततष्टाप् । सुचण्डिमधुरा इति परशुरामलक्षणं तस्यौग्र्य-प्राधान्यात् । अलमतिशयेन । केशानां विध्वंसनमाकर्षणम्, अर्थात्स्त्रीणाम् । लङ्केशो रावणस्तस्य विध्वंसनं चेति रामलक्षणम् । अश्रान्तमविरतमुत्कण्ठेन मदेनाहंकारेण मदिरादिजनितमत्ततया च लौल्यं चाञ्चल्यमिति बलरामलक्षणम् । इष्टानां सुहृदां अस्माकं कदनं दुःखदायित्वम्, इष्टं यज्ञश्च तस्य कदनं विनाशनं चेति बुद्धलक्षणम् । निस्त्रिंशस्य खड्गस्येव तीक्ष्णया लीलया उन्नतिर्यस्य, पक्षे खड्गधारित्वं कल्किल-क्षणम् ॥ **ललितेति** । दुर्ललिता लालित्यरहिताजनि । विशाखेति विगता शाखा यस्याः सेति च ॥ **स्रगियमिति** । चित्तस्य वीथी मार्गः । वृत्तिरिति यावत् । तत्तुल्येयं स्रक् तव कुचस्वरूपशिवमूर्ध्नि स्वर्धुनी गङ्गा तस्या विलासेन कान्तिं पुष्णातु । नखचिह्नान्येव शशिरेखास्तस्या धाम्नि ॥ **यस्मिन्निति** । हे तन्वङ्गि, एवंभूते तस्मिन् काकुपरायणे तव वाम्यानि काम्यानि इच्छास्पदानि भवन्ति ।

वृन्दारण्यकदम्बमण्डपतटक्रीडाभराखण्डले
तस्मिन्काकुपरायणे तव कथं काम्यानि वाम्यान्यपि ॥ ४५ ॥

**राधिका**—(साभ्यसूयम् ।) [1]अवेहि णिब्बुद्धिए, अवेहि ।

**कृष्णः**—

धूलिधूसरितचन्द्रकाञ्चलश्चन्द्रकान्तमुखि वल्लभो जनः ।
अर्पयन्मुहुरयं नमस्क्रियां भिक्षते तव कटाक्षमाधुरीम् ॥ ४६ ॥

**ललिता**—[2]राहे, झत्ति कन्धरं परावट्टेहि । पुट्ठदो आआरेदि अज्जिआ ।

(राधिका तथा करोति ।)

(प्रविश्य ।)

**मुखरा**—(कृष्णं विलोक्य । संस्कृतेन ।)

वनासक्तं चेतः प्रणयति गृहाद्यो विरमय-
न्वरेण्यं बन्धूनां प्रणयमपि विस्मारयति यः ।
महाधूर्तश्रेणीगुणगरिमविस्तारणपटोः
करोत्सङ्गे तस्य त्वमपि सरले पुत्रि पतिता ॥ ४७ ॥

---

1 अपेहि निर्बुद्धिके, अपेहि ।

2 राधे, झटिति कन्धरां परावृत्त(र्त)य । पृष्ठत आकारयत्यार्या ।

---

भर्याचैवेति शेषः । तत्र कारणमाह—यस्मिन् श्रीकृष्णे ते नेत्रसरोरुहाङ्गणस्य भूमेर्मनागीषदपि विदूरं प्राप्ते निमिषोऽपि मन्वन्तरैस्तुलनां प्राप्नोति । आखण्डले इन्द्रे ॥ **धूलीति** । चन्द्रादपि कान्तं मुखं यस्याः हे तथाविधे ॥ **राहे इति** । झटिति शीघ्रम् । आकारयति आह्वयति ॥ **वनासक्तमिति** । गृहाद्विरमयन् गृहाद्विरतं कृत्वा वनासक्तं चेतः करोतीत्यर्थः । धूर्तश्रेणीगुणानां गरिमा आधिक्यं

**मधुमङ्गलः**—[1]भो वअस्स, मारुदवाआलीकिदमुही तुज्झ वंशीव एत्थ वुड्डिआ पत्ता । ता एत्थ किं विलम्बेसि ।

**कृष्णः**—सखे, क मे वंशी ।

**मधुमङ्गलः**—[2]सेअं ज्जेव जाणासि कह् चि ।

**कृष्णः**—स्फुटं राधिकयैव हृतेयम् । तदेनां विना कथं प्रस्थानमुचितम् ।

**मधुमङ्गलः**—(सपरिहासम् ।) [3]भो, इदं क्खु अम्हाणं गरुअं भाअधेअं जं इमाहिं मोहिणीहिं तुमं चोरिअ ण संगोविदोसि । ता चिट्ठदु वरागी मुरलिआ । अत्ताणं घेत्तूण पलाअम्ह ।

**कृष्णः**—(सस्मितम् ।) रे वाचाट, तिष्ठ । (इति परिक्रम्य ।)

सुन्दरि बिन्दुच्युतके तव नैपुण्यं बभूव पुण्येन ।
शशिमुखि वशीकृताभूद्वंशी मम यत्त्वया त्वरया ॥ ४८ ॥

**राधिका**—(सभ्रूभङ्गम् ।) [4]मुंञ्चेहि णं भङ्गिए कलङ्कारोवणम् । का जाणादि तुम्ह् वंशिअम् ।

---

१ भो वयस्य, मारुतवाचालीकृतमुखी तव वंशीवात्र बृद्धा प्राप्ता । तदत्र किं विलम्बसे ।

२ स्वयमेव जानासि कुत्रेति ।

३ भोः, इदं खल्वस्माकं गरिष्ठं भागधेयं यदेताभिर्मोहिनीभिस्त्वं चोरयित्वा न संगोपितोऽसि । तत्तिष्ठतु वराकी मुरलिका । आत्मानं गृहीत्वा पलायामहे ।

४ मुञ्चैनं भङ्ग्या कलङ्कारोपणम् । का जानाति त्वद्वंशिकाम् ।

---

तस्य विस्तारणे प्रकाशने पटोर्दक्षस्य ॥ **तदत्रेति** । शीघ्रमितो याहीति भावः ॥ **तदेनामिति** । एनां मुरलीं विना कथं मम प्रस्थानम् ॥ **सुन्दरीति** । बिन्दुच्युतकेऽलंकारविशेषे । तव नैपुण्यमभ्यासः । वशीकृता अपनीता । पक्षे

**ललिता**—(संस्कृतेन ।)

न काचिद्गोपीनां भवति परवित्तप्रणयिनी
सतीनामस्माकं न वद परिवादं ननु मुधा ।

(इत्यर्धोक्ते ।)

**कृष्णः**—सखि ललिते, प्रसीद । दर्शय सख्यौ दाक्षिण्यम् ।

**ललिता**—

अलं जल्पैरेभिर्व्रज निजनिकेतं द्रुतमितो
वयं किं संवृत्तास्तव कितव वेणोः प्रतिभुवः ॥ ४९ ॥

**राधिका**—(वृद्धामासाद्य ।) [1]अज्जे, दिट्ठं तुए अप्पणो णत्तिणो चरित्तम्, जं एसो अम्हाणं चोरिआपरिवादं देदि ।

**मुखरा**—(ससंरम्भम् ।) [2]रे कण्हडा, सच्चं मए विण्णादम्, जं णत्तिअं राहिअं मह तुमं विडम्बेदुं लद्धो सि ।

**मधुमङ्गलः**—[3]अइ णिट्ठुरसंसिणि णिवंसिए, वंसिअं हरिअ तुज्झ णत्तिणी तुमं दुग्गं लद्धा ।

**कृष्णः**—आर्ये मुखरे, सत्यमाह वयस्यः ।

---

१ आर्ये, दृष्टं त्वयात्मनो नप्तुश्चरित्रम्, यदेषोऽस्मभ्यं चोरिकापरिवादं ददाति ।

२ रे कृष्ण, सत्यं मया विज्ञातम्, यन्नप्त्रीं राधां मम त्वं विडम्बितुं लब्धोऽसि ।

३ अयि निष्ठुरशंसिनि निर्वंशिके, वंशिकां हृत्वा तव नप्त्री त्वां दुर्गं लब्धा ।

---

बिन्दुविशिष्टा वंशी बिन्दुलुप्ता वशीकृतेति बिन्दुच्युतकालंकारः ॥ प्रसीदेति विपरीतलक्षणा । तथा च युष्माकं सति त्वं यथा यथा त्वं तथा मुरल्या अचौर्यमयीति भाषया परीहासः कृतः सख्यौ मयि ॥ अलमिति । कितवो धूर्तः । प्रतिभुवो

**मुखरा**—[1]अइ राहिए, अवि किं सच्चं एदम् ।

**राधिका**—[2]अज्जिए, वुन्दावणे इन्धणाणं किं महग्घदा जादा, जं हत्थमेत्ता वंसकट्ठिआ अम्हेहिं हरिदव्वा ।

**कृष्णः**—(स्मित्वा ।) हे पीते प्रचण्डदेवि, यदि वेणुं न जहर्थास्ततः कथं तद्वार्तायां स्मितकुड्मलोल्लासादुत्फुल्लकपोलान्दोलायितदृगन्तासि ।

**मुखरा**—(साक्रोशम् ।) [3]चपल, अहिमण्णुणो सधम्मिणी तुज्झ वन्दणिज्जा, तहवि परिहसज्जइ ।

**मधुमङ्गलः**—[4]मुहरे, एसो हं जण्णोववीअस्स सवामि । दिट्ठं मए पुहवीविलग्गसेहरेण अज्ज राहिआ वन्दिदा पिअवअस्सेण ।

**मुखरा**—(सानन्दम् ।) [5]तदो इमस्स धम्मो वड्ढिस्सदि ।

(सर्वे स्मितं कुर्वन्ति ।)

**मुखरा**—[6]कण्हड, इमिणा तुज्झ चावलेण खिज्झिस्सदि बल्लवइन्दो णन्दो । ता गदुअ गोमण्डलं संभालेहि ।

---

१ अयि राधे, अपि किं सत्यमिदम् ।

२ आर्ये, वृन्दावन इन्धनानां किं महर्घता जाता, यद्धस्तमात्रा वंशकाष्ठिकास्माभिर्हर्तव्या ।

३ चपल, अभिमन्योः सधर्मिणी तव वन्दनीया, तदपि परिहसे ।

४ मुखरे, एषोऽहं यज्ञोपवीतस्य शपामि । दृष्टं मया पृथ्वीविलग्नशेखरेणाद्य राधिका वन्दिता प्रियवयसेन ।

५ तदैतस्य धर्मो वर्धिष्यते ।

६ कृष्ण, अनेन तव चापलेन खेत्स्यति बल्लवेन्द्रो नन्दः । तद्गत्वा गोमण्डलं संभालय ।

---

लग्नका जामिनाः प्रसिद्धाः ॥ **चपलेति** । वन्दनीया वन्दनयोग्या । व्रजेश्वरी-

**कृष्णः**—आर्ये, विना वेणुं विप्रकृष्टाया धवलावलेराकृष्टिर्दुर्घटा।

**ललिता**—कण्ह, अबलावलीणो ति कीस उज्जुअं ण कधेसि।

**कृष्णः**—ललिते, वृद्धयाद्य सबला यूयम्। ततः कथमिदं कथयिष्यामि।

**मुखरा**—(सरोषम्। संस्कृतेन।)

नवीनाग्रे नप्त्री चटुल नहि धर्मात्तव भयं
न मे दृष्टिर्मध्येदिनमपि जरत्या पटुरियम्।
अलिन्दात्त्वं नन्दात्मज न यदि रे यासि तरसा
ततोऽहं निर्दोषा पथि कियति हंहो मधुपुरी॥ ५०॥

**मधुमङ्गलः**—(सरोषम्।) दुम्मुहि वुड्ढिए, तुज्झ कंसदो किं अम्हे भाएम्ह, जं महुपुरं आसन्नं कहेसि।

**मुखरा**—(सव्याजम्।) अरे, चिट्ठ। एसाहं णत्तिणिअं घेत्तूण राजसहं पत्थिदम्हि।

(इति राधादिभिरनुगम्यमाना निष्क्रान्ता।)

**कृष्णः**—सखे, समागच्छ। कालिन्दीकच्छमुपेत्य गवामुद्देशं करवावः।

(इति परिक्रम्य। वलितग्रीवं पश्यन्। सोच्छ्वासम्।)

---

१ कृष्ण, अबलावलीति कस्मादृजु न कथयसि।

२ दुर्मुखि वृद्धे, तव कंसात्किं वयं बिभीमः, यन्मधुपुरमासन्नं कथयसि।

३ अरे, तिष्ठ। एषाहं नप्त्रीं गृहीत्वा राजसभां प्रस्थितास्मि।

---

मातुलपुत्रभार्यात्वेन तव मातुलानीसंबन्धादित्यर्थः॥ **कण्हेति**। खेत्स्यति खेदं प्राप्स्यति॥ **नवीनेति**। मध्येदिनं दिनस्य मध्येऽपि। 'पारे मध्ये षष्ठ्या वा'

मुद्रां धैर्यमयीं क्षणं विवृणुते तारल्यलक्ष्मीं(च्वीं) क्षणं
सोपेक्षाः क्षणमातनोति भणितीरौत्सुक्यभाजः क्षणम् ।
शुद्धां दृष्टिमितः क्षणं प्रणयते प्रेङ्खत्कटाक्षां क्षणं
रोषेण प्रणयेन चाकुलितधी राधा द्विधा भिद्यते ॥ ५१ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति वेणुहरणो नाम चतुर्थोऽङ्कः ।

---

## पञ्चमोऽङ्कः ।

(ततः प्रविशति पौर्णमासी ।)

**पौर्णमासी**—

स्नेहः शोककृशानोर्विनोदसदनं सदेति नातथ्यम् ।
स्निग्धाद्य राधिकायां यदहं तेनाशु दग्धास्मि ॥ १ ॥

(पुरोऽवलोक्य ।) केयं मधुमङ्गलसङ्गिनी माममिवर्तते । (पुनर्निभाल्य ।)

अजनितशासनभङ्गा स्थिरजङ्गममण्डलैः स्ववने ।
निखिलप्राणिरुतज्ञा विन्दति पुरतः कथं वृन्दा ॥ २ ॥

(प्रविश्य ।)

**वृन्दा मधुमङ्गलश्च**—अम्ब, वन्दे ।

**पौर्णमासी**—स्वस्ति युवाभ्याम् ।

**वृन्दा**—भगवति, कथं शोचन्त्यसि ।

---

इति समासः । कियति पथि निकट एवेति भावः । तेन मधुपुरीं गत्वा सर्वं कंसाय निवेद्य शास्तिं कारयामीति भीषयति ॥ इति विदग्धमाधवे चतुर्थोऽङ्कः ॥

वैशाखपूर्णिमातः पञ्चम्यास्तिथेः प्रातस्तनीं मानवेणुहरणादिलीलां वर्णयित्वेदानीं तद्दिनस्यैवापराह्णपर्यन्तं वृद्धाप्रतारणमानभञ्जनवनविहरणादिलीलां प्रकाशयितुं पञ्चममङ्कमारभते—ततः प्रविशतीत्यादिना ॥ **स्नेह इति** । स्नेहः प्रेम, तिलादिरसश्च । कृशानुरग्निः ॥ **अजनितेति** । स्ववने वृन्दावने स्थावर-

**पौर्णमासी**—वत्से, विदग्धपुंगवस्याङ्गसंगमलक्ष्माणि राधिकायामभिलक्ष्य मन्युमानभिमन्युः संप्रति मधुपुर्यां सकुटुम्बो वस्तुमुत्कण्ठते। तत्रापि तदम्बा तदीर्ष्याजम्बालावलीजृम्भायां कादम्बिनीभावमालम्ब्य राधामरालीमुद्वेजयति। तेनाद्य शोचामि।

**वृन्दा**—पौर्णमासीशुभाशीश्चन्द्रिकैव विघ्नान्धकारसंहारिणी।

**मधुमङ्गलः**—[1]अज्जे, कहं राहोपरि तुज्झ वरिट्ठं पेम्मम्।

**पौर्णमासी**—वत्स, सत्यपि भूरिणि प्रेमोदयकारणे तस्यामनन्यापेक्षि ममेदं प्रेम।

**वृन्दा**—युक्तमिदम्। यतः।

जगति किल विचित्रे कुत्रचिन्निश्चलात्मा
भवति निरभिसंधिः कस्यचित्प्रेमबन्धः।
विलसति समुदीर्णे कुम्भजे खञ्जनाली
कलितवति तथास्तं हन्त नाशं प्रयाति ॥ २ ॥

**मधुमङ्गलः**—[2]केरिसं णिरहिसंधिणो पेम्मस्स चिण्हम्।

**पौर्णमासी**—

स्तोत्रं यत्र तटस्थतां प्रकटयच्चित्तस्य धत्ते व्यथां
निन्दापि प्रमदं प्रयच्छति परीहासश्रियं बिभ्रती।

---

१ आर्ये, कथं राधोपरि तव वरिष्ठं प्रेम।
२ कीदृशं निरभिसंधिनः प्रेम्णश्चिह्नम्।

---

जङ्गमैर्न जनित आज्ञाभङ्गो यस्याः ॥ **वत्से इति**। तदम्बा जटिला। तस्या राधायां या ईर्ष्या संभोगदर्शनादिचिह्नेन क्षान्तिः सैव जम्बालवलिः पङ्कसमूहस्तस्य जृम्भायामाविर्भावनिमित्ते कादम्बिनीभावं मेघमालात्वमालम्ब्य राधैव मराली हंसी तामुद्वेजयति। पक्षे—**जगतीति**। निरभिसंधिरुपाधिशून्यः। कुम्भजे समुदीर्णेऽगस्त्यनक्षत्र उदयति सति खञ्जनसमूहो विलसति। तथा वर्षाकालेऽस्तंगतवति खञ्जनस्य नाशः अदर्शनम्। अहंसी पङ्काद्बिभेतीति प्रसिद्धिः ॥ **स्तोत्रमिति**।

दोषेण क्षयितां गुणेन गुरुतां केनाप्यनातन्वती
प्रेम्णः स्वारसिकस्य कस्यचिदियं विक्रीडति प्रक्रिया ॥ ४ ॥

**मधुमङ्गलः**—एंवं रूवं क्खु दोणं राहामाहवाणं पेम्म ।

**पौर्णमासी**—वत्स, किमुच्यते । माधुर्यसंसर्गिणो नैसर्गिकस्य परस्परवल्लभानां विदग्धमिथुनानां प्रेमश्रृङ्खलाबन्धस्य परमोत्कर्षरेखायां दृष्टान्तः किल राधामाधवयोर्भावामृतभूमा ।

**वृन्दा**—भगवति, श्रूयताम् ।

यष्टिं वष्टि न पाणिना कलयितुं श्रृङ्गे न सङ्गार्थितां
धत्ते धातुभिरङ्गमण्डनमयीं नाङ्गीकरोति क्रियाम् ।
पर्णं वादयते न घूर्णितमनास्तीरे कृतान्तस्वसुः
किंतूत्क्राम्यति मुक्तविभ्रमगुणग्रामोऽद्य दामोदरः ॥ ५ ॥

**पौर्णमासी**—(सखेदम् ।) किमिदम् ।

**मधुमङ्गलः**—लंलिदा कौडिल्लेण ।

**पौर्णमासी**—नूनं ललितया हठानुवर्तितमाना वर्तते राधा ।

**वृन्दा**—अथ किम् ।

**पौर्णमासी**—न जाने क्व खल्वद्य ललितादयः ।

**वृन्दा**—तासामुद्देशाय मया सुबलः प्रेषितोऽस्ति ।

---

१ एवं रूपं खलु तयो राधामाधवयोः प्रेम ।
२ ललिता कौटिल्येन ।

---

यत्र प्रेम्णि स्तोत्रं तटस्थतां प्रकटयत्सचित्ते व्यथां धत्ते । केनापि दोषेण क्षयितामनातन्वती प्रक्रियेति संबन्धः । कमपि गुणादिकमुपाधिमालम्ब्य जायते चेत्तदा दोषदर्शनेन क्षीणो भवति गुणदर्शनेन वृद्धो भवति । निरुपाधिस्तु दोषगुणौ नापेक्षते । यथा अज्ञानिनः स्वदेहप्रेमपरमोत्कर्षस्य सीमारूपं रेखायाः ॥ **यष्टिमिति ।**

(प्रविश्य।)

**सुबलः**—[1]अज्जे, वन्देमि।

**पौर्णमासी**—सुबल, क दृष्टा राधादयः।

**सुबलः**—[2]मुहराघरोवान्तवट्टिणो रसालस्स मूले।

**पौर्णमासी**—वत्स मधुमङ्गल, तूर्णमनुसृत्य राधिकामभिसारयन्त्यसि। तदेतया सूक्तिचन्द्रिकया त्वमानन्दय मुकुन्दम्।

(मधुमङ्गलः सहर्षं निष्क्रान्तः।)

**वृन्दा**—(जनान्तिकम्।) सुबल, मया समर्पितं पद्मं त्वया किं नाम विशाखायां संचारितम्।

**सुबलः**—[3]अध इं।

**पौर्णमासी**—वृन्दे, यावत्प्रसाद्य प्रसाध्य च राधां संचारयामि तावदधुनावाभ्यां पुरः कदम्बनिकुञ्जे विश्राम्यताम्।

(वृन्दा सुबलेन सह निष्क्रान्ता।)

**पौर्णमासी**—(परिक्रम्य।) कथं ललितेयमायाति।

(प्रविश्य।)

**ललिता**—[4]भअवदि, तुम्ह सआसं गच्छन्ती म्हि।

**पौर्णमासी**—किमर्थम्।

**ललिता**—[5]अज्जे, तिणा धुत्तेण पुणो पुणो अवरज्झिदा पिअसही लाहवं अमणिअ सुट्ठु उक्कण्ठेदि। ता किं करिस्सम्।

---

१ आर्ये, वन्दे।

२ मुखरागृहोपान्तवर्तिनो रसालस्य मूले।

३ अथ किम्।

४ भगवति, तव सकाशं गच्छन्त्यस्मि।

५ आर्ये, तेन धूर्तेन पुनः पुनरपराद्धायिता प्रियसखी लाघवममत्वा सुष्ठूत्कण्ठयति। तत्किं करिष्यामि।

---

यष्टिं पाणिना कलयितुं न वष्टि न कामयते। शृङ्गे सङ्गार्थितां न धत्ते॥ तिणेति।

**पौर्णमासी**—वत्से, मुञ्च मुधाकालुष्यम् । नापराध्यति माधवः । किंतु मधुमङ्गलप्रमादितैव वः खेदाय बभूव ।

**ललिता**—(स्वगतम् ।) मंमा वि एवं णन्दीमुहीए कथिदम् । (प्रकाशम् ।) अज्जे, पेक्ख एषा राही रसालस्य मूले कम्पन्ती किंपि जप्पदि ।

(ततः प्रविशति सानुतापं राधा ।)

**राधा**—(संस्कृतेन ।)

कर्णान्ते न कृता प्रियोक्तिरचना क्षिप्तं मया दूरतो
मल्लीदाम निकामपथ्यवचसे सख्यै रुषः कल्पिताः ।
क्षोणीलग्नशिखण्डशेखरमसौ नाभ्यर्थयन्नीक्षितः
स्वान्तं हन्त ममाद्य तेन खदिराङ्गारेण दंदह्यते ॥ ६ ॥

**पौर्णमासी**—पुत्रि, प्रच्छन्नमुपसृत्य शृणुवः प्रेमविलासम् ।

(इत्युभे तथा स्थिते ।)

**राधिका**—(सचापलम् । पुनः संस्कृतेन ।)

धन्यास्ता हरिणीदृशः स रमते याभिर्नवीनो युवा

(पुनः सशङ्कम् ।)

---

१ ममाप्येवं नान्दीमुख्या कथितम् । आर्ये, पश्यैषा राधा रसालस्य मूले कम्पमाना किमपि जल्पति ।

---

अपरज्ञायिता अपमानिता ॥ **कर्णान्त इति** । निकामं पथ्यं वचो यस्या एवंभूतायै सख्यै विशाखायै । **अभ्यर्थयन्निति** । 'अर्थं याचने' इत्यस्यात्मनेपदित्वेऽपि परस्मैपदप्रयोगः । दंदह्यतेऽतिशयेन दह्यते ॥ **धन्या इति** । चापल्यादीनां

स्वैरं चापलमाकलय्य ललिता मां हन्त निन्दिष्यति।

(पुनः सौत्सुक्यम्।)

गोविन्दं परिरब्धुमिन्दुवदनं हा चित्तमुत्कण्ठते

(पुनः सामर्षम्।)

धिग्वामं विधिमस्तु येन गरलं मानाभिधं निर्ममे ॥ ७ ॥

**ललिता**—अदक्खिणे, चिट्ठ। सअं जेव कण्हं णिराकदुअ भङ्गीए मे दूसेसि।

**राधिका**—(भङ्गीमवेक्ष्य। संस्कृतेन।)

कृमिरपि नमितात्मा हन्त वृन्दावनेऽस्मि-
न्कलयति निजमौलौ बर्हमौलेर्निदेशम्।
अनुनयति मुहुर्मां नेतुकामालिनीयं
यदमलमधुरोक्तिस्तस्य दृष्टिं शठस्य ॥ ८ ॥

**पौर्णमासी**—(सनर्मस्मितम्।) निखिलमेव वृन्दाटवीप्राणिवृन्दं दूतीभूतमियं मन्यते महामानिनी।

**राधिका**—(प्रेमावेशं नाटयन्ती। सचमत्कारम्।) कधं एसो मं मोट्टिमं परिरद्धुं उवसण्णो कण्हो।

**पौर्णमासी**—गम्भीरानुरागविवर्तोऽयम्, यदस्यां माधवस्य विस्फुरणम्।

**राधिका**—(सहुंकारं परावृत्य।) हन्त भो वङ्ककलासालि, चन्दाअ-

---

१ अदक्षिणे, तिष्ठ। स्वयमेव कृष्णं निराकृत्य भङ्ग्या मां दूषयसि।

२ कथमेष मां बलात्कारेण परिरब्धुमुपसन्नः कृष्णः।

३ हन्त भो वक्रकलाशालिन्, चन्द्रावलीक्रोडचिरासङ्गभङ्गुरकुरङ्ग, अपेहि। एष त्वं परिभविष्यसि मया।

---

संचारिभावानां॰॰वण्यम्॥ कृमिरपीति। तस्य शठस्य दृष्टिं नेतुकामेयमलिनी॥

लीकोडचिरासङ्गभङ्गुरकुरङ्ग, अवेहि । एसो तुमं परिभविस्ससि मए । (इति कर्णोत्पलं क्षिपन्ती । संस्कृतेन ।)

यमुनातीरकदम्बाः संप्रति मम हन्त साक्षिणो यूयम् ।
एष बलान्मामबलां गोकुलधूर्तः कदर्थयति ॥ ९ ॥

**पौर्णमासी**—ललिते, परां कोटिमधिरूढा राधिकोत्कण्ठा । तदियं त्वरितमभिसार्यताम् ।

**ललिता**—(परिक्रम्य ।) हला राहि, एक्का ज्जेव किं मन्तेसि ।

**राधिका**—(ललितामालोक्य । स्वगतम् ।) कधं सच्चं जेव एक्कम्हि, जं कण्हो ण दीसइ । (इति सौत्सुक्यम् ।) हला ललिदे,

परतणुपवेसविज्जा कहमिह सामेण कामिणा पढिदा ।
मम हिअए माणण्णी पविसिअ णिव्वाविदो जेण ॥ १० ॥

(प्रविश्य ।)

**विशाखा**—हला, सुबलहत्थादो लद्धा इअं पत्तिआ ।

**ललिता**—(गृहीत्वा वाचयति ।)

मेध्योऽपि माधविकया मधुपो यदेष
क्षिप्तः स्वयं प्रचलता नवपल्लवेन ।

---

१ हला राधे, एकैव किं मन्त्रयसि ।

२ कथं सत्यमेवैकास्मि, यत्कृष्णो न दृश्यते । हला ललिते,
परतनुप्रवेशविद्या कथमिह श्यामेन कामिना पठिता ।
मम हृदये मानाग्निः प्रविश्य निर्वापितो येन ॥

३ हला, सुबलहस्ताल्लब्धेयं पत्रिका ।

---

परेति । परां कोटिं परमुत्कर्षम् ॥ हलेति । वृन्दया प्रेषितेति शेषः ॥ मेध्य इति । मेध्यः पवित्रः दोषरहितः । तां विनान्यत्रासंचारयन्निति यावत् । नवपल्ल-

तस्याः खलु क्षतिरियं सुषमाक्षयेण
नन्दत्ययं तु विरुवन्नरविन्दिनीषु ॥ ११ ॥

**राधिका**—(सविषादम् । संस्कृतेन ।)

अजनि विमुखः शङ्के पङ्केरुहाक्षि विचक्षणो
मयि मधुरिपुर्दोषश्रेणीविहारवनश्रियाम् ।
अकलितरसः सूचीविद्धो रजः प्रसरान्धधी-
र्न मधुपयुवा किं केतक्यां विरक्तिमुपैष्यति ॥ १२ ॥

(इति वैक्लव्यं नाटयति ।)

**पौर्णमासी**—नहि चन्द्रेण चन्द्रिकाया मोक्षः कदापि संभवति ।

**विशाखा**—हला, समास्सस । तुह उक्कण्ठिदं तक्किअ मए कण्हपउत्तिं विण्णादुं णन्दीमुही पेसिदत्थि ।[1]

(प्रविश्य ।)

**नान्दीमुखी**—(संस्कृतेन ।)

मृदुरपि निसर्गतस्त्वं कथमार्द्रे माधवे कठोरासि ।
अथवा नवनीतपुटी हिमद्रवे कक्खटा प्रैक्षि ॥ १३ ॥

**राधिका**—हला, अवि णाम सुहं वट्टदि माहवो ।[2]

---

१ सखि, समाश्वसिहि । तव उत्कण्ठां तर्कित्वा मया कृष्णप्रवृत्तिं विज्ञातुं नान्दीमुखी प्रेषितास्ति ।

२ सखि, अपि नाम शुभं वर्तते माधवः ।

---

वेन करस्थानीयेन । **नन्दत्ययमिति** । मधुपं विना माधव्याः शोभैव न भवति । मधुपस्य तु माधवीं विनाप्यरविन्दिनीषु परमानन्दो भवत्येवेत्यर्थः ॥ **अजनीति** । मयि कथंभूतायाम् । दोषश्रेणीनां विहारवनसंपत्तिरूपाणां दोषश्रेण्यो विहरन्ति अवकाशं लभन्त इति यावत् । एतदेवार्थान्तरन्यासेनाह—अकलितरस इति । प्रसरः समूहः ॥ **मृदुरपीति** । कक्खटा । कठिनीत्यर्थः ॥ **क्षणमपीति** ।

**नान्दी**—(संस्कृतेन ।)

क्षणमपि न सुहृद्भिर्नर्मगोष्ठीं विधत्ते
रचयति न च चूडां चम्पकानां चयेन ।
परमिह मुरवैरी योगिवन्मुक्तभोग-
स्तव सखि मुखचन्द्रं चिन्तयन्निर्वृणोति ॥ १४ ॥

**राधिका**—(विशाखां परिष्वज्य । संस्कृतेन ।)

भूयो भूयः कलिविलसितैः सापराधापि राधा
श्लाघ्येनाहं यदघरिपुणा बाढमङ्गीकृतास्मि ।
तत्र क्षामोदरि किमपरं कारणं वः सखीनां
दत्तामोदां प्रगुणकरुणामञ्जरीमन्तरेण ॥ १५ ॥

(नेपथ्ये ।)

गर्वोदग्राः कलमविकलं तन्वतामन्यपुष्टा
निष्प्रत्यूहं मृगयुवतयः सस्यमास्वादयन्तु ।
सीमन्तिन्यो गृहनयमयीं शीलयन्तु प्रणालीं
धूर्तो वेणुर्विहरति करे नाद्य पीताम्बरस्य ॥ १६ ॥

**राधा**—(वंशीमुद्धाव्य । सोपालम्भम् ।)

सद्वंशतस्तव जनिः पुरुषोत्तमस्य
पाणौ स्थितिर्मुरलिके सरलासि जात्या ।

---

निर्वृणोति सुखं प्राप्नोति ॥ **भूय इति** । कलिविलसितैः **कलहविलासैर्हेतुभिः** सापराधा अत एव राध्यतीति राधा । वो युष्माकं सखीनां प्रगुणकरुणमञ्जरी-मन्तरेण विना किमपरं कारणमस्ति । किंभूताम् । दत्तामोदाम् । **मत्प्रेयसीनां** विशाखादीनामस्यां कारुण्यमस्तीति बुद्ध्या कृष्णो मां प्रति कदाचित्कृपां **करोती-**त्यर्थः ॥ **गर्वोदग्रा इति** । वृन्दावचनम् । गर्वेणोदग्रा उच्चतराः सन्तः **अन्य-**पुष्टाः कोकिलाः । निष्प्रत्यूहं निर्व्यूहम् । सस्यं घासम् । सीमन्तिन्यः **स्त्रियः** । गृहनीतिमयीं प्रणालीं शीलयन्तु ॥ **सद्वंशेति** । कस्माद्गुरोः सकाशाद्दीक्षा गृहीता

कस्मात्त्वया सखि गुरोर्विषमा गृहीता
गोपाङ्गनागणविमोहनमन्त्रदीक्षा ॥ १७ ॥

**विशाखा**—हला, अचरिआ इअं वंशी, जं मारुदाहिमुहीकिदा सअं सद्दाएदि।

**राधिका**—सहि, परिक्खिस्सम्। (इति तथा करोति।)

**विशाखा**—सुणिज्जउ महुरा काअली। ललितं वरेहिमासुणोदु कण्हस्स परिवारः।

(प्रविश्य।)

**वृन्दा**—(प्रच्छन्नम्।) भगवति, न कदापि वंशी देयेति श्रुतं मया ललितादुर्मन्त्रितम्।

**पौर्णमासी**—वत्से, युक्तिमायत्यां करिष्यामि।

(प्रविश्य।)

**जटिला**—णूणं इदो कण्हेण मिलिदं जं मुरली वादिदा। (विलोक्य।) अह्वो, कहं वासहाणवीहत्थे कण्हस्स वंशी। ता णिहुदं गदुअ णं गेहिस्सम्। (इति सहसोपसृत्य सामर्षम्।) अयि दुव्विणीद-गोआलपुत्तिए, मुञ्च मुरलिअम्। (इत्याकृष्य गृह्णाति।)

---

१ सखि, आचार्येयं वंशी, यन्मारुताभिमुखीकृता स्वयं शब्दायते।

२ सखि, परीक्षिष्ये।

३ श्रूयतां मधुरा काकली। ललितं वरमाशृणोतु कृष्णस्य परिवारः।

४ नूनमितः कृष्णेन मिलितं यन्मुरली वादिता। अहो, कथं वार्षभान-वीहस्ते कृष्णस्य वंशी। तन्निभृतं गत्वा एनां ग्रहीष्यामि। अयि दुर्विनीत-गोपालपुत्रिके, मुञ्च मुरलिकाम्।

---

तस्य नाम मन्द। तेनैवानर्थः कृतः। नतु तव कोऽपि दोष इत्यर्थः। कस्मात्का-रणादिति वा॥ वत्स इति। आयत्यामुत्तरकाले। 'उत्तरः काल आयतिः' इत्य-

ललिता—(अपवार्य ।) हद्धी, पमादो । कधं वुड्डिआ अतक्किदं मुरली आअट्टिदा ।

जटिला—णं क्खु भअवदीए पौर्णमासीए दंसइस्सम्, जा मज्ज भणिदं ण पत्तिआएदि ।

पौर्णमासी—पुत्रि वृन्दे, गहनं कष्टमापतितम् । पश्य जटिला ममोटजदिशं प्रयाति ।

वृन्दा—भगवति, मा चिन्तय । क्षिप्रमसौ मुरलीं लुण्ठयामि । (इति निष्क्रान्ता ।)

ललिता—(सभयमनुसृत्य ।) अज्जे, कीस अलीअं सङ्कसि, जं एसा कालिन्दीकूलम्हि अम्हेहि लद्धा ।

जटिला—(सरोषम् ।) चवले दुम्हन्तिणि, चिट्ठ चिट्ठ ।

(प्रविश्य ।)

सुबलः—अज्जे जडिले, पेक्ख दहिलम्पडा मक्कडी तुज्झ घरं पविसइ ।

जटिला—(साचिग्रीवमालोक्य ।) सुबल, सच्चं कहेसि । मक्खण-चोरिणी एसा मक्कडी । (इति परावृत्य धावन्ती निष्क्रान्ता ।)

पौर्णमासी—नूनं वृन्दया प्रेरितास्ति कक्खटीयं नाम जरन्मर्कटी ।

---

१ हा धिक्, प्रमादः । कथं वृद्धया अतर्कितं मुरली आकृष्टा ।
२ एनां खलु भगवत्यै पौर्णमास्यै दर्शयिष्यामि, या मम भणितं न प्रत्येति ।
३ आर्ये, कस्मादलीकं शङ्कसे, यदेषा कालिन्दीकूलेऽस्माभिर्लब्धा ।
४ चपले दुर्मन्त्रिणि, तिष्ठ तिष्ठ ।
५ आर्ये जटिले, पश्य दधिलम्पटा मर्कटी तव गृहं प्रविशति ।
६ सुबल, सत्यं कथयसि । नवनीतचौरिण्येषा मर्कटी ।

**सुबलः**—१णन्दीमुहि, पेक्ख। पक्खित्तेण वेणुणा मूढजडिलाए मक्कडी ताडिदा।

**पौर्णमासी**—(सहर्षम्।) दिष्ट्या मुरलीमादाय कक्खटीयं कदम्बमधिरूढा।

(सर्वाः प्रहर्षं नाटयन्ति।)

(प्रविश्य।)

**जटिला**—२हद्धी वच्छ सुबल, हत्थादो मे मुरली गदा। ता तुज्झ णिम्मञ्छणं जामि। समप्पेहि मे वंसिअम्।

**सुबलः**—३अज्जे, जहत्थणामा एसा कक्खटी केअलं तुज्झ बहिणीपुत्तादो विसालादो भाएदि। ता गोवद्धणसिङ्गे खेलन्तं णं गदुअ अब्भत्थेहि।

(जटिला निष्क्रान्ता।)

**पौर्णमासी**—दिष्ट्या व्याजेन जरतीं दूरमपसार्य धूर्तोऽयं भ्रूविभ्रमेण ललितां त्वरयति।

**ललिता**—(नेत्रप्रान्तं कूणयन्ती।) ४हला राहि, एहि। वेणुं मग्गम्हे।

**राधिका**—(स्वगतम्।) ५दिट्ठिआ अहिसारेदि मम्।

---

१ नान्दीमुखि, पश्य। प्रक्षिप्तेन वेणुना मूढजटिलया मर्कटी ताडिता।

२ हा धिक् वत्स सुबल, हस्तान्मे मुरली गता। तस्मात्तव निर्मन्थनं यामि। समर्पय मे वंशिकाम्।

३ आर्ये, यथार्थनामा एषा कक्षटी केवलं तव भगिनीपुत्राद्विशालाद्बिभेति। तद्गोवर्धनशृङ्गे खेलन्तमेनं गत्वाभ्यर्थय।

४ हला राधे, एहि। वेणुं मार्गयावः।

५ दिष्ट्याभिसारयति माम्।

(प्रविश्यापटीक्षेपेण ।)

**मुखरा**—विंसाखे, अहिमण्णू संदिसइ—अज्ज जोइतिआणं उपदेसेण मए गोमङ्गला णाम चण्डी पूअणीज्जा । ता पूअणोपहारं घेतूण तुमं चेच्चरुक्खस्स तले राहिअं लम्भय त्ति ।

**राधिका**—(सखेदमपवार्य ।) हन्त, दुद्देअस्स पाडिउल्लम् । (इति ललितामुखमीक्षते ।)

**ललिता**—हला, सच्चणामा एसो अहिमण्णु । ता गदुअ पूअणोवहारं संपादेम्ह ।

(इति सर्वा निष्क्रान्ताः ।)

**पौर्णमासी**—(सुबलमनुसृत्य सव्यथम् ।) वत्स, दुःसमाधानेयं गतिरुपस्थिता । तदद्य वृन्दया सह गत्वा समाश्वस्यतां त्वया पाटवेन पुण्डरीकाक्षः । मया तु प्रामाणिकपुरंध्रीणां गोष्ठीमासाद्य जटिलाकौटिल्यं वर्णयिष्यते । (इति निष्क्रान्ता ।)

**सुबलः**—(परिक्रम्य ।) एंसा तमालतले डाहिणहत्थे गहीदवंसिआ वुन्दा चिट्ठइ ।

---

१ विशाखे, अभिमन्युः संदिशति—अद्य ज्योतिषिकानामुपदेशेन मया गोमङ्गला नाम चण्डी पूजनीया । तत्पूजनोपहारं गृहीत्वा त्वं चैत्यवृक्षस्य तले राधिकां लम्भयेति ।

२ हन्त, दुर्दैवस्य प्रातिकूल्यम् ।

३ हला, सत्यनामा एषोऽभिमन्युः । ततो गत्वा पूजनोपहारं संपादयामः ।

४ एषा तमालतले दक्षिणहस्ते गृहीतवंशिका वृन्दा तिष्ठति ।

---

मरः ॥ **अहो इति** । अहो इति विस्मये ॥ **विशाखे इत्यादि** । लम्भय प्रापय ॥ दिष्ट्या वेणुमार्गणापदेशेन ॥ **सत्यनामा इत्यादि** । सत्यनामा अभि-

(प्रविश्य ।)

वृन्दा—भोः सुबल, विलोकितसर्वार्थोसि । तदलं तद्वार्तया ।

सुबलः—वुंन्दे, तुरिअं एहि । वेणुं जेव उवहरम्ह ।

(इत्युभौ परिक्रामतः ।)

सुबलः—वुंन्दे, महुमङ्गलेण वढ्ढिदुक्कण्ठो पिअवअस्सो मग्गं ज्जेअ पेक्खन्तो चिट्ठइ । ता ण जाणे अकिदत्थाणं अम्हाणं तत्थ गमणे का तस्स दसा भवे ।

वृन्दा—सुबल, सत्यं ब्रवीषि । पश्यायं पुंनागतरोरुपकण्ठे समुत्कण्ठते कंसारिः ।

सुबलः—वुंन्दे, भणामि । चिन्तेहि जुत्तिम् ।

वृन्दा—(विमृश्य ।) सुबल, गोविन्दस्य क्षणविनोदाय चिन्तितोपायास्मि । तदेहि । तन्निष्पत्तये वेशं भजावः ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशति मधुमङ्गलेनोपास्यमानः कृष्णः ।)

कृष्णः—(सौत्सुक्यम् ।)

राधा पुरः स्फुरति पश्चिमतश्च राधा<br>
राधाधिसव्यमिह दक्षिणतश्च राधा ।<br>
राधा खलु क्षितितले गगने च राधा<br>
राधामयी मम बभूव कुतस्त्रिलोकी ॥ १८ ॥

---

१ वृन्दे, त्वरितमेहि । वेणुमेवोपहरावः ।

२ वृन्दे, मधुमङ्गलेन वर्धितोत्कण्ठः प्रियवयस्यो मार्गमेव पश्यंस्तिष्ठति । तन्न जानेऽकृतार्थानामस्माकं तत्र गमने का तस्य दशा भवेत् ।

३ वृन्दे, भणामि । चिन्तय युक्तिम् ।

मधुमङ्गलः—'पिअवअस्स, भअवदीए अहिसारिदं दाणिं ज्जेव पेक्खिस्ससि राहिअम् ।

कृष्णः—

करेणान्तस्तुष्ट्या सललितमवष्टभ्य ललिता-
कराङ्गुष्ठं राधा भृशमभिसरन्ती सरभसम् ।
किमद्य स्मेराक्षी स्मरपरिमलोल्लासिवलय-
ध्वनिर्मां निर्मास्यत्यनुपमचमत्कारचटुलम् ॥ १९ ॥

मधुमङ्गलः—भो, मा उत्तम्मस्स । कङ्कणझणक्कारो सुचइ ।

(नेपथ्ये ।)

हला ललिदे, पेक्ख । सो एसो पुण्णाअरुक्खो दीसइ । (पुनस्तत्रैव ।) सहि राहे, घिट्ठभमरजम्पिदं पेक्ख णम् । ता क्खणं इध ज्जेव चिट्ठम्ह ।

मधुमङ्गलः—(सचापलम् ।) भो पिअवअस्स, वामदो किं ण पेच्छसि । एसा ललिदाए सद्धं राहिआ समाअदा ।

कृष्णः—(सोत्कण्ठम् ।) दिष्ट्या साक्षादद्य मदीक्षणयोः सौख्यं विस्तार्यते सख्या ।

---

१ प्रियवयस्य, भगवत्याभिसारितामिदानीमेव प्रेक्षिष्यसे राधिकाम् ।

२ भोः, मा उत्ताम्यस्व । कङ्कणझणत्कारः सूच्यते ।

३ हला ललिते, पश्य । स एष पुंनागवृक्षो दृश्यते । सखि राधे, धृष्टभ्रमरजल्पितं पश्यैनम् । तत्क्षणमिहैव तिष्ठावः ।

४ भोः प्रियवयस्य, वामतः किं न पश्यसि । एषा ललितया सार्धं राधिका समागता ।

---

सर्वतोभावे मन्युर्यस्य स तथा ॥ करेणेति । निर्मास्यति किं करिष्यति ॥ नेपथ्ये राधिकावेषधारी सुबलो ललितावेषधारिणीं वृन्दामाह—हला ललिदे इति । दिष्ट्येति । सख्या राधयेति कृष्णविवक्षितम् । वस्तुतस्तु सख्या सुबलेन ।

मधुमङ्गलः—(सगर्वम् ।) [1]भो, कीस ण वित्थारिदव्वं जत्थ अहं विअद्धो दूदो म्हि ।

कृष्णः—सखे, पुरःस्थयोरपि मत्प्रिययोरव्यलीकता नाद्याप्यवधारिता । यदाभ्यां न संनिधीयते ।

मधुमङ्गलः—[2]पिअवअस्स, सुट्ठु पसण्णं राहीं जाणाहि । जं साडिअञ्चलझम्पिदा मुरली झलकइ ।

कृष्णः—(सस्नेहम् ।)

विधुरेति दिवा विरूपतां शतपत्रं बत शर्वरीमुखे ।
इति केन सदा श्रियोज्ज्वलं तुलनामर्हति मत्प्रियाननम् ॥२०॥

(इति सकौतुकमनुसर्पति ।)

(नेपथ्ये ।)

[3]वारिसहाणइ लच्छी इअं पुरो राइणी समुग्गमइ ।
चन्दाअलीकुडुम्बअचओर मा धाअ सुप्पसहम् ॥ २१ ॥

---

१ भोः, कस्मान्न विस्तारयितव्यं यत्राहं विदग्धो दूतोऽस्मि ।

२ प्रियवयस्य, सुष्ठु प्रसन्नां राधां जानीहि । यत्साटिकाञ्चलाच्छादिता मुरली झलकति ।

३ वार्षभानवी लक्ष्मीरियं पुरो रागिणी समुद्गच्छति ।
चन्द्रावलीकुटुम्बचकोर मा धाव सुप्रसभम् ॥

---

श्रीकृष्णवाक्यस्यान्यथाप्रयोगासंभवात् ॥ **सखे इति** । मत्प्रिययो राधाललितयोः । वस्तुतस्तु वृन्दासुबलयोः । अव्यलीकता प्रीतिः । वस्तुतस्त्वव्यलीकत्वं सत्यत्वम् । 'व्यलीकत्वं प्रियेऽनृते' इत्यमरः ॥ **वारिसेति** । वार्षभानवी लक्ष्मीः वृष[राशि]-

**मधुमङ्गलः**—१ललिदे, भमिदासि । ण क्खु चओरो । पेक्ख एसो रहङ्गीरमणो, जेण वारिसहाणइ लच्छी कामिज्जइ ।

(नेपथ्ये पुनरन्यतः ।)

२भो कण्ह, सुणाहि ।

**मधुमङ्गलः**—(विलोक्य सशङ्कम् ।) ३एषा डाहिणे विसालस्स बहिणी सारङ्गी णाम बालिआ ।

**कृष्णः**—सखे, मा शङ्किष्ठाः । सुष्ठु बालिकेयम् ।

(प्रविश्य ।)

**सारङ्गी**—४भो कण्ह, सुणाहि । वुड्ढिआ मुहला भणादि—कीस तुए मम णत्तिणी अलीअं दूसिज्जइ । जं तुज्झ वंसिआ अम्हेहिं कक्खलिआहत्थे दिट्ठा, ता मा गोहि णं ति ।

**कृष्णः**—सारङ्गिके, विज्ञापय मुखरां यदहं लब्धमुरलीकोऽस्मि ।

---

१ ललिते, भ्रान्तासि । न खलु चकोरः । पश्यैष रथाङ्गीरमणः, येन वार्षभानवी लक्ष्मीः काम्यते ।

२ भोः कृष्ण, शृणु ।

३ एषा दक्षिणे विशालस्य भगिनी सारङ्गी नाम बालिका ।

४ भोः कृष्ण, शृणु । वृद्धा मुखरा भणति—कस्मात्त्वया मम नप्त्री मिथ्या दूष्यते । यत्तव वंशिकास्माभिः कक्खटिकाहस्ते दृष्टा, तस्मान्मा...मेनामिति ।

---

स्वभानुसंबन्धिनी शोभा । वृषभानोः कन्यायाश्च शोभा । रागिणी रक्तिमायुक्ता, रागः क्रोधस्तद्युक्ता च । वस्तुतस्त्वनुरागवती च । चन्द्रावल्याः कुटुम्बचकोररूपकृष्णबलात्कारेणात्र धावनं तव दुःखदमेव भविष्यतीत्यर्थः ॥ **ललिदे इत्यादि** । रथाङ्गीरमणश्चक्रवाकः, पक्षे रथाङ्गं चक्रं तद्युक्तः रमणश्चेति पदद्वयेन वार्षभानवी लक्ष्मीः काम्यते । श्लेषार्थः पूर्ववत् ॥ **वुड्ढिआ इत्यादि** । ............हस्तदानाभूदिति गम्यते ॥ ललितावेशधरा वृन्दा वदति—**हलेति** । बालस्वभावो-

(नेपथ्ये।)

हंला, पच्छन्ना होहि।

सारङ्गी—(नेपथ्याभिमुखमवलोक्य। सेर्ष्यम्।) हंला राहिए, चेचरुक्खस्स तले तुमं विदुदि आआलेदि मे भादुओ। ता तत्थ किंति ण गदासि।

(नेपथ्ये।)

हंदासे साहासारङ्गमुहि सारङ्गिए, तुमंपि दुदिआ जडिला संवुत्ता। ता वुड्डसद्दूलस्स तुण्डकोडरे पडेहि।

सारङ्गी—(सामर्षम्।) ँललिदे, उलङ्घिअ मं जेव्व तुमं तज्जसि। ता अहं गदुअ माउसिआए जडिलाए विण्णविस्सम्। (इति निष्कान्ता)

मधुमङ्गलः—(सावज्ञम्।) जौदु णाम बालिआपलावे कस्स वीसम्भो।

---

१ सखि, प्रच्छन्ना भव।

२ हला राधिके, चैत्यवृक्षस्य तले त्वां······आकारयति मम भ्राता। तस्मात्तत्र किमिति न गतासि।

३ हताशे शाखासारङ्गमुखि सारङ्गिके, त्वमपि द्वितीया जटिला संवृत्ता। तस्माद्वृद्धशार्दूलस्य तुण्डकोटरे पत।

४ ललिते, अपराधं कृतवती मामेव त्वं तर्जयसि। तदहं गत्वा मातृस्वसे जटिलायै विज्ञापयिष्यामि।

५ जातु नाम बालिकाप्रलापे कस्य विश्रम्भः।

---

किरियम्। भ्राता१ अभिमन्युरित्यर्थः॥ हृदासे इति। शाखासारङ्गो वानरस्तस्य मुखमिव मुखं यस्या हे तथाभूते॥ जात्विति। विश्रम्भो विश्वासः॥

(नेपथ्ये ।)

[1]सखि राहे, मुञ्च मुञ्च । सुणाहि संकिदेण किं भणेदि ललिदा ।

(पुनर्नेपथ्ये ।)

किं तस्करीं युवतिमानधनस्य वंशी-
मङ्के करोषि विकिर त्वरया विदूरे ।
एषा प्रयातु वनिताम्बरतस्कराय
योग्येन सङ्गमिह गच्छतु वस्तु योग्यम् ॥ २२ ॥

**कृष्णः**—(स्मित्वा ।) सखे, पश्येयमञ्चलाद्वंशीं बलादिवाकृष्य पुरस्ताच्चिक्षेप । तदिमां गृहाण ।

(मधुमङ्गलस्तथा करोति ।)

(नेपथ्ये दूरतः ।)

[2]अम्मा, सारङ्गीए असच्चं ण भणिदम् ।

**कृष्णः**—(सव्यथम् ।) सखे, पश्य । पुरो निष्ठुरेयमुपस्थिता जरती ।

**मधुमङ्गलः**—[3]हन्त, साअणकसुनभुअङ्गीव क्रूरमुही एसा रोसावेसेण लट्ठिं खिवन्ती परुसं गज्जइ जडिला ।

(नेपथ्ये ।)

[4]भो दुकुलाङ्गारधूमलेह, पच्चहं वञ्चेसि दाणिं का पउत्ती ।

---

१ सखि राधे, मुञ्च मुञ्च । शृणु संस्कृतेन किं भणति ललिता ।

२ अम्मा, सारङ्ग्या असत्यं न भणितम् ।

३ हन्त, श्रावणकृष्णभुजङ्गीव क्रूरमुख्येषा रोषावेशेन लकुटीं क्षिपन्ती परुषं गर्जति जटिला ।

४ भो द्विकुलाङ्गारधूमलेख, प्रत्यहं वञ्चसीदानीं का प्रवृत्तिः ।

---

**किमिति** । विकिर क्षिप ॥ **अम्मा इति** । स्त्रीणां विस्मयोक्तिः ॥ **व्यक्ति-**

मधुमङ्गलः—[1]हद्धी । कअलीव्व कम्पइ राहिआ ।

(नेपथ्ये ।)

[2]अज्जे, पसीद । ण क्खु अम्हे अवरज्झम्ह ।

मधुमङ्गलः—[3]पेक्ख राहिअं हत्थे घेत्तूण लल्दिाए समं पत्थिदा वुड्ढिआ ।

कृष्णः—(सखेदम् ।) सखे, न जाने किमद्य प्रतिपद्यते कठोरेयं जटिला । तदुपसृत्य तत्त्वमवधार्यताम् ।

(मधुमङ्गलो निष्क्रान्तः ।)

कृष्णः—(निःश्वस्य ।)

व्यक्तिं गते मम रहस्यविनोदवृत्ते
कष्टो लघिष्ठहृदयस्तरसाभिमन्युः ।
राधां निरुध्य सदने विनिगूहते वा
हा हन्त लम्भयति वा यदुराजधानीम् ॥ २२ ॥

(प्रविश्य ।)

मधुमङ्गलः—[4]भो पिअवअस्स, अच्चरिअम् । णूणं राहिआ कंपि विज्जं जाणई ।

---

१ हा धिक् । कदलीव कम्पते राधा ।

२ आर्ये, प्रसीद । न खलु वयमपराध्यामः ।

३ पश्य राधिकां हस्ते गृहीत्वा ललितया समं प्रस्थिता वृद्धा ।

४ भोः प्रियवयस्य, आश्चर्यम् । नूनं राधिका कामपि विद्यां जानाति ।

---

मिति । सदने गृहे निरुध्य विनिगूहते संवृणोति । यदुराजधानीं मथुराम् ॥

**कृष्णः**—कथ्यतां कीदृशी विद्या ।

**मधुमङ्गलः**—[1]कुलवुड्ढाहीरिमण्डले णिविट्ठाए भअवदीए अग्गदो विक्कोसन्ती जडिला राहिअं णीदा ।

**कृष्णः**—ततस्ततः ।

**मधुमङ्गलः**—[2]तदो दिट्ठं मए सिणेहेण विक्खुहिदासु तासु सव्वासु राहिआओग्गुण्ठणं उत्सारिअ हसन्तो सुअलो संवुत्तो ।

**कृष्णः**—(स्मित्वा ।) ततस्ततः ।

**मधुमङ्गलः**—[3]तदो हासकोलाहले उवरदे रुट्ठाहिं सव्वाहिं णिब्भच्छिदा लज्जाए णदमुही जडिला पलाइदा ।

**कृष्णः**—कथ्यताम् । तयोर्द्वितीया कथमभूत् ।

**मधुमङ्गलः**—[4]राहिआए कण्णे पढिदेण केण वि मन्तेण पढमं जेव्व सा वुन्दा किदा ।

**कृष्णः**—सखे, न राधिकायाः खल्वियं विद्या । किंतु तामभिमन्युना समाहूतामवधार्य मद्विनोदाय यद्वृन्दया प्रणीतमिदं कौतूहलम् ।

---

१ कुलवृद्धाभीरिमण्डले निविष्टाया भगवत्या अग्रतो विक्रोशन्ती जटिला राधिकां नीता ।

२ ततो दृष्टं मया स्नेहेन विक्षुभितासु तासु सर्वासु राधिकावगुण्ठनं त्यक्त्वा हसन्सुबलः संवृत्तः ।

३ ततो हासकोलाहल उपरते रुष्टाभिः सर्वाभिर्निर्भर्त्सिता लज्जया नतमुखी जटिला पलायिता ।

४ राधिकया कर्णे पठितेन केनापि मन्त्रेण प्रथममेव सा वृन्दा कृता ।

---

**कथ्यतामिति** । द्वितीया ललिता किमभूत् ॥ **दधानेति** । राधा हरिविरह-

**मधुमङ्गलः**—(साट्टहासम् ।) [1]भो, सच्चं विअ कहेसि । दिट्ठं मए पुणोवि वुन्दाए । णिम्मिदराहावेसो सुअलो मुहराघरे पविट्ठो ।

(नेपथ्ये ।)

दधाना मध्याह्नज्वलदरुणकान्तप्रतिमया
वपुस्तुल्यं गण्डस्थलतुलितकारण्डवरुचिः ।
कृशाङ्गीयं निद्रापरिमलदरिद्राक्षिकमला
सखीबाधां राधा हरिविरहखिन्ना प्रथयति ॥ २४ ॥

**कृष्णः**—(सदृष्टिक्षेपम् ।) सखे, दिष्ट्या कीरेणामुना समाश्वासितोऽस्मि ।

**मधुमङ्गलः**—[2]णूणं वुन्दाभासिदं अणुकरेदि कीरो ।

**कृष्णः**—सखे, द्रष्टुमिच्छामि तादृशौ वृन्दासुबलौ । ततस्त्वर्यताम् ।

(मधुमङ्गलो वंशीं कृष्णकरे निक्षिप्य परिक्रामति ।)

**कृष्णः**—सुविच्युतां वंशीमुपलब्धोऽस्मि । तदेनां पूरयामि । (इति तथा करोति ।)

**मधुमङ्गलः**—(क्षणमुत्कर्णो भवन् । संस्कृतेन ।)

मनोहारी कोऽपि प्रतिमुखविसारी मृदुतया
विरावोऽयं वर्यां श्रवणपरिचर्यां रचयति ।

---

१ भोः, सत्यमिव कथयसि । दृष्टं मया पुनरपि वृन्दया निर्मितराधावेषः सुबलो मुखरागृहे प्रविष्टः ।

२ नूनं वृन्दाभाषितमनुकरोति कीरः ।

---

खिन्ना सती बाधां पीडां प्रथयति । कथंभूता । मध्याह्ने ज्वलन्ती या अरुणकान्तप्रतिमा सूर्यकान्तमयी प्रतिमा तया तुल्यं वपुर्दधाना । गण्डस्थलेन तुलिता कारण्डवरुचिर्यया । कारण्डवो बकभेदः ॥ **मनोहारीति** । प्रतिमुखं सर्वासु दिक्षु विसर्तुं वि-

ततः कर्णोत्तंसीकृतचटुलवंशी कलरुति-

निरातङ्का शङ्के मिलति कलविङ्कावलिरितः ॥ २५ ॥

[1](पुनर्विलोक्य ।) ही ही । सद्दसाधम्मेण पदारिदो म्हि । कङ्कणसिञ्जिदं क्खु एदम् ।

राधिका—

[2]अमिअं पिअसि सुमहुरं वमसि रुअं विस्समोहणं विसमम् ।

तुज्झ ण दूसणमधवा मुरलि जदो दारुणासि किदा ॥ २६ ॥

[3]ललिता—हला, पुरदो पुण्णाअस्स मूले कण्हो रेहदि ।

मधुमङ्गलः—(विलोक्य । सहर्षम् ।) [4]दूरे मग्गणिज्जो अत्थो कहं सअं जेव हत्थे उवत्थिदो । (इति परावृत्य ।) पिअवअस्स, पेक्ख । वुन्दाए सद्धं सुवलो तुज्झ संणिहिं लद्धो ।

कृष्णः—(सस्नेहमालोक्य ।) हन्त, प्रियसख्यौ प्रविष्टा मे दृष्टिः प्रकाममामोदते । (इति परिक्रम्य ।) भो सखीनां शिखामणे, तरसा संनिधीयताम् ।

---

१ ही ही । शब्दसाधर्म्येण प्रतारितोऽस्मि । कङ्कणसिञ्जितं खल्वेतत् ।

२ अमृतं पिबसि सुमधुरं वमसि रुतं विश्वमोहनं विषमम् ।
तव न दूषणमथवा मुरली यतो दारुणासि कृता ॥

३ हला, पुरतः पुंनागस्य मूले कृष्णो राजते ।

४ दूरे मार्गणीयोऽर्थः कथं स्वयमेव हस्त उपस्थितः । प्रियवयस्य, पश्य । वृन्दया सार्धं सुबलस्तव संनिधिं लब्धः ।

---

शेषेण गन्तुं शीलमस्य तथाभूतो विरावः श्रवणयोः सौख्यं करोति तस्मादेव हेतोः । कलविङ्कावलिश्चटकसमूहः । इतो मिलतीति शङ्के । कर्णोत्तंसीकृता चटुलासा वंशी रुतार्थतया तथाभूता सती ॥ अमृतमिति । दारुणा कृपाहीना, पक्षे दारुणा काष्ठेन कृता ॥ हन्तेति । प्रियसख्यौ सुबले प्रविष्टा दृष्टिः । वस्तुतस्तु प्रिये सख्यौ ललिताराधे पूर्व

**राधिका**—(सस्मितमपवार्य ।) हंला ललिदे, मं क्खु सुअलं जेव जाणादि दे वअस्सो ।

**कृष्णः**—सखे मधुमङ्गल, पश्य संविधानकस्य सौष्ठवं यदसौ साक्षादमतो राधिकैव सवयस्या प्रतिभाति ।

**ललिता**—हंला राहिए, परिफुल्लो एसो सुरवल्लहो ।

**मधुमङ्गलः**—(सेर्ष्यम् ।) ठंग्गिणि वुन्दे, अज्ज वि किंति अम्हाणं पुरदो राही राहीति भणसि । सुअल त्ति उज्जुअं कहेहि ।

**कृष्णः**—सखे, मालमेवं ब्रवीः । प्रकामं राधाभिधानं धिनोति माम् । तदनेनाहमप्यामन्त्रयिष्ये । (इति संनिधाय ।) सखि राधे, परिष्वजस्व माम् । क्षणमहं तदेव प्रियाभिमर्शसौख्यमनुभवामि ।

**ललिता**—(राधां पृष्ठतः कृत्वा ।) णोंअर, तत्थ गदुअ सुअलं जेव आलिङ्गेहि । अलं इमिणा दम्भमुद्दापउएण ।

**मधुमङ्गलः**—(सरोषम् ।) वुंन्दे, तुमं पइदिएवि णूणं ललिदा संवुत्ता, जं पज्जुस्सुअं पिअवअस्सं वारेसि ।

---

१ हला ललिते, मां खलु सुबलमेव जानाति तव वयस्यः ।

२ हला राधे, परिफुल्ल एष सुरवल्लभः ।

३ ठगिनि वृन्दे, अद्यापि किमित्यस्माकं पुरतो राधा राधेति भणसि । सुबलेति ऋजु कथय ।

४ नागर, तत्र गत्वा सुबलमेवालिङ्गय । अलमनेन दम्भमुद्राप्रयोगेण ।

५ वृन्दे, त्वं प्रकृतितोऽपि नूनं ललिता संवृत्ता, यत्पर्युत्सुकं प्रियवयस्यं वारयसि ।

---

प्रविष्य या दृष्टिः सेदानीमामोदते । सखीनां शिखामण इत्युभयथा सारूप्यम् ॥ **सखे इति** । संविधानकस्य···त्यस्य वेशरचनायाः ॥ **हलेति** । सुरवल्लभः पुंनागः, पक्षे भङ्ग्या कृष्णश्च । यतस्त्वां सुबलत्वेन जानाति ॥ **सखे इति** । अनेन राधानाम्ना । आमन्त्रयिष्ये संबोधयिष्यामि । प्रियास्पर्शसुखजन्यकम्पादिकमभिनयामि ॥

(प्रविश्य ।)

वृन्दा—सखि राधे, त्वद्भुजवल्लरीस्पर्शकामोऽयं पुरस्तात्पुंनागः । तदेनं दोहददानेनोत्फुल्लय ।

मधुमङ्गलः—(सविस्मयम् ।) वँअस्स, दिट्ठं वुन्दाए इन्दजालम् । (इति सकौतुकमवेक्ष्य ।) इन्दजालिणि वुन्दे, घणाइदी वि धूमलेहा विअद्धसारङ्गं आकड्ढिदुं णारिहदि ।

वृन्दा—आर्य, तडिद्दामकण्ठीयं कादम्बिनी प्रतीयताम् ।

कृष्णः—(निभाल्य । सविस्मयम् ।) कथं सत्यमेवानया रङ्गणमालिकया दुस्त्यजकण्ठीयं प्रिया मे वार्षभानवी ।

मधुमङ्गलः—अँइ देइ वुन्दे, पसीद । मा क्खु बुद्धिं मोहेहि । जं राहा चैत्तरुक्खमूले पत्थिदा ।

कृष्णः—(राधामालोक्य ।)

तवानुकारात्सुबलं दिदृक्षुणा मया त्वमाप्ता पुरतः सुदुर्लभा ।
सादृश्यतः काचमिवाभिलष्यता प्रेमाग्रभूमिर्वणिजा हरिन्मणिः ॥२७॥

---

१ वयस, दृष्टं वृन्दाया इन्द्रजालम् । इन्द्रजालिनि वृन्दे, घनाकृतिरपि धूमलेखा विदग्धसारङ्गमाकृष्टुं नार्हति ।

२ अयि देवि वृन्दे, प्रसीद । मा खलु बुद्धिं मोहय । यद्राधा चैत्यवृक्षमूले प्रस्थिता ।

---

सखीति । दोहदं पुष्पोत्पत्त्यर्थमौषधम्, अभीष्टं च । उत्फुल्लय पुष्पवन्तं कुरु, आनन्दय च ॥ वअस्सेति । सारङ्गश्चातकः ॥ आर्य इति । तडित्स्वरूपा माल्यकण्ठीयं कादम्बिनी मेघमाला प्रतीयताम् । तेन तमाकृष्टुं योग्यैवेयमित्यर्थः । नायं सुबलः सत्यैव राधेति भावः । तडिद्दामकण्ठीत्वसाधारणेन लक्षणेन कृष्णं परिचिनोति सत्यमिति कृत्रिमैव राधा सुबलः । अत एव तत्रोक्तम्—'पुणो वुन्दाए णिम्मितराहावेसो सुअलो मुद्दराघरे पहिदो' इति ॥ तवेति । अनुकाराद् हरि-

राधिका—चिट्ठ। विण्णादो सि।

ललिता—

जेलइ सही मह राहा मन्दा जं होइ णीलिणीराआ।
कण्ह तुमं णन्दसि जं धण्णो हालिद्दराओ सि॥ २८॥

कृष्णः—

रोहिण्याधरशोभया विहरसे ज्येष्ठासि वामभ्रुवां
वाण्या राजसि चित्रया परिजनेष्वार्द्रां धियं यच्छसि।
राधे त्वं श्रवणोत्तरेति परितस्तारोदयोल्लासिनी
नाश्लेषार्पणदीक्षिते मयि कथं दाक्षिण्यमातिष्ठसि॥ २९॥

वृन्दा—

मुधा मानोन्नाहाद्ग्लपयसि किमङ्गानि कठिने
रुषं धत्से किं वा प्रियपरिजनाभ्यर्थनविधौ।

---

१ तिष्ठ। विज्ञातोऽसि।

२ ज्वलति सखी मम राधा मन्दा यद्भवति नीलिनीरागा।
कृष्ण त्वं नन्दसि यद्धन्यो हारिद्रारागोऽसि॥

---

न्मणेः सादृश्यात्। काचमिव किमपि वस्तु अभिलष्यता वणिजा यथा मरकतमणिः प्राप्तः॥ **जलइ इति**। हरिद्रारागस्य ग्रहणे त्यागे च सुकरत्वात्तव राधाविषये दुःखं नोत्पद्यते। नीलीरागस्य त्यागे दुःशकत्वात्तद्विषये दुःखमेव प्राप्नोति मे सखीति भावः॥ **रोहिणीति**। अधरशोभया त्वं रोहिणी लोहितवर्णा, पक्षे शब्दश्लेषेण रोहिणीनक्षत्रम्। ज्येष्ठा श्रेष्ठा, पक्षे तन्नामनक्षत्रम्। चित्रया मनोहरया वाण्या राजसि, पक्षे पूर्ववत्। आर्द्रां सुखदाम्। श्रवणाभ्यां कर्णाभ्यां उत्तरा श्रेष्ठा, पक्षे श्रवणश्चासावुत्तरा चेति सा। ताराणां मुक्तानां नक्षत्राणां चोदय उल्लासिनी। इतिशब्दो हेतौ। अत एवाश्लेषा नक्षत्रं तस्यार्पणे, पक्ष आश्लेष आलिङ्गनम्। दाक्षिण्यमानुकूल्यम्॥ **मुधेति**। उन्नाहो वृद्धिस्तस्मात्। इह

प्रकामं ते कुञ्जालयगृहपतिस्ताम्यति पुरः
कृपालक्ष्मीवन्तं चटुलय दृगन्तं क्षणमिह ॥ ३० ॥

**कृष्णः**—
निष्ठुरा भव मृद्वी वा प्राणास्त्वमसि राधिके ।
अस्ति नान्या चकोरस्य चन्द्रलेखां विना गतिः ॥ ३१ ॥

**राधा**—सैच्चं माइणं वि तुमं मोहणो सि । (इति सशब्दं क्रन्दति ।)

**ललिता**—(संस्कृतेन ।)
धारा बाष्पमयी न याति विरतिं लोकस्य निर्भिंत्सतः
प्रेमास्मिन्निति नन्दनन्दनरतं लोभान्मनो मा कृथाः ।
इत्थं भूरि निवारितापि तरले मद्वाचि साचीकृत-
भ्रूद्वन्द्वा नहि गौरवं त्वमकरोः किं नाथ रोदिष्यसि ॥ ३२ ॥

(कृष्णः करारविन्देन राधिकाश्रुबिन्दूनपसारयति ।)

**राधिका**—मुंद्धजणे वि वङ्कं ववहरन्तो कीस ण लज्जसि ।

**कृष्णः**—
स्मरक्रीडालुब्धः पशुपरमणीषु स्फुटमहं
तथाप्यक्ष्णोर्वर्तिस्त्वमसि मम दिव्याञ्जनमयी ।
तपाद्याः किं भृङ्गं पृथुलमृतुलक्ष्मीर्न भजते
रसोल्लासादेनं तदपि हि मधुश्रीर्मदयति ॥ ३३ ॥

**वृन्दा**—सखि, यथार्थं वक्तिवनमाली ।

---

१ सत्यं मायिनामपि त्वं मोहनोऽसि ।
२ मुग्धजनेऽपि वक्रं व्यवहरन्कस्मान्न लज्जसे ।

---

श्रीकृष्णे । दृगन्तं कटाक्षं चटुलय । कीदृशं दृगन्तम् । कृपालक्ष्मीवन्तम् ॥ **धारेति** । अस्मिन् कृष्णे । प्रेम निर्भिंत्सतः कर्तुमिच्छतो जनस्य । इति हेतोर्नन्दनन्दनरतं मनो मा कृथाः ॥ **स्मरेति** । ममाक्ष्णोः कर्पूरादिनिर्मितदिव्याञ्जनमयी

कृष्णः—प्रिये, त्वया सहचर्या वनविहारमङ्गीकर्तुमिच्छामि।

वृन्दा—तेनाहं सखि, वृन्दमपधापयामि। (इति परितः पश्यन्ती।)

सितं वितनु माधवि प्रथय मल्लि हासोद्गमं
मुदा विकस पाटले पुरटयूथि निद्रां त्यज।
प्रसीद शतपत्रिके भज लवङ्गवल्लि श्रियं
दधार सह राधया हरिरयं विहारस्पृहाम्॥ २४॥

मधुमङ्गलः—[1]ही ही। कहं कन्तारजक्खिण्णीए वाआमात्तएण उप्फुल्लीकिअं वल्लीमण्डलम्।

कृष्णः—सखे, चित्तमामोदयन्ति पुष्पामोदवत्यो वीरुधः।

मधुमङ्गलः—[2]वअस्स, तुह्माणं सव्वाओ चित्तं आमोदेन्ति लदा। मम उण एक्का हेमजूही ज्जेव, जा गोकुलेसरीए सक्किअङ्गव्वधिअं धारेइ।

ललिता—(स्मित्वा।) [3]अज्ज, तदो क्खु पअडिदा दे रसण्णदा।

मधुमङ्गलः—(सेर्ष्यम्।) [4]वअस्स, पेक्ख। इमाओ रत्ता अवि वक्ककिंसुअलइआओ गोइआ विअ मं ण सुहवेदि।

---

१ ही ही कथं कान्तारयक्षिण्या वाचामात्रेणोत्फुल्लीकृतं वल्लीमण्डलम्।

२ वयस्य, युष्माकं सर्वाश्चित्तमामोदयन्ति लताः। मम पुनरेका हेमयूथ्येव, या गोकुलेश्वर्या संस्कृतं गवाधतमिव स्तबकं (?) धारयति।

३ आर्य, ततः खलु प्रकटिता ते रसज्ञता।

४ वयस्य, पश्य। एता रक्ता अपि वक्रकिंशुकलतिका गोपिका इव मां न सुखयन्ति।

---

वर्तिकास्वरूपा त्वम्। तपाया निदाघायाः। ऋतुलक्ष्मीस्तत्तदुद्भवपुष्पादीनि······ किं न भजते। तदपि मधुश्रीः रसोल्लासाद्धेतोरेनं भ्रमरं पृथुलं यथा स्यात्तथा मदयति। अन्यऋतुशोभासेविन्यपि भ्रमरे सर्वतः परमोत्कृष्टापि वसन्तश्रीर्नोदास्ते, प्रत्युत आनन्दयत्येव यथा, त्वमपि तथा भवेति भावः॥ वअस्सेति। किंशुकः

ललिता—वुंन्दे, एदे वल्लआ विअ पेक्खीअन्तु जवात्थवआ, जा क्खु लोअणलोहणिज्जा वि णामोदं वित्थारेन्ति ।

मधुमङ्गलः—(सरोषम् ।) जाणम्ह तुम्हाणं गोइआणं कम्म जाओ रसकुम्भं वि दिढं णिम्मन्थिअ सिणेहं कड्ढन्ति ।

वृन्दा—(स्मित्वा ।) सखि ललिते,

ये दण्डपाशभाजः स्फुटं वहन्तो मनः शिलाकल्पम् ।
कान्तारमाश्रयन्ते तेभ्यो वः क्षेममुल्लसतु ॥ ३५ ॥

कृष्णः—(स्मित्वा ।) वृन्दे, ज्ञातं ज्ञातम् । वुद्धिं मूर्च्छयता कूर्चिकालोभेन गोपिकाञ्चलग्राहिणी त्वं कृतासि ।

(नेपथ्ये ।)

कस्तूरिकेव दुरवच्छदसंगमेयं
गोपीततिर्मदमयी किल पिच्छिला च ।

---

१ वृन्दे, एते बल्लवा इव प्रेक्ष्यन्तां जवास्तबकाः, ये खलु लोचनलोभनीया अपि नामोदं विस्तारयन्ति ।

२ जानामि युष्माकं गोपिकानां कर्म या रसकुम्भमपि दृढं निर्मथ्य स्नेहं कर्षन्ति ।

---

पलाशः । अत्र प्रेमवतीष्वपि गोपीषु वाम्यलक्षणं वक्रत्वमित्याक्षेपः ॥ वुन्देति । अत्र कृष्णादिषु बहिः सौन्दर्यमात्रं लभ्यते, प्रेमगन्धोऽपि नास्तीत्याक्षेपः ॥ जाणम्ह इति । अयं भावः—युष्मद्धस्तपातेन स्नेहमयोऽपि दुग्धदध्यादिकुम्भविलोडनतो नवनीतक्रमेण स्नेहरहितो भवति । कुतः पुनर्युष्मासु स्नेहसंबन्धः । स्नेहमपि कृष्णं तद्गुणाक्रमणेन स्नेहहीनं भवत्या वदन्तीति भावः ॥ य इति । दण्डपाशो लोकमारणार्थं गवां पालनार्थं च भजते । निर्दयत्वेन शिलाकल्पं मनो वहन्तः । मनःशिला धातुविशेषस्तेनाकल्पं वेषं च । कान्तारं दुर्गमं वर्त्म आश्रयन्ते । वर्त्मपातिन इति भावः । पक्षे गोचारणार्थं वनमार्गपातिनः कृष्णादयश्च शस्त्रप्रहरणप्रेमच्छेदनादिभिः प्राणहारकत्वेन तुल्या एवेति भावः ॥ वृन्देति । कूर्चिका क्षीरविकारः 'खुरचिनी' इति प्रसिद्धस्तत्र लोभेन कृता ॥ कस्तूरिकेति ।

दाक्षिण्यतस्तनुभृतामनुरञ्जनोऽयं
वासन्तवायुरिव हन्त मुरान्तकारी ॥ ३६ ॥

**कृष्णः**—(पृष्ठतो दृष्टिं क्षिपन् ।) साधु भो कीरराज, साधु ।

**मधुमङ्गलः**—विहङ्गपुङ्गअ, चउद्दहविज्जाविअक्खणो दीहाउ होहि ।

**ललिता**—हण्डे चण्डालकीर, पअण्डससाअणतुण्डराहुणो पाहुणो होदु दे पिण्डससी ।

**कृष्णः**—सखे, तूर्णमस्मै समर्पय पाकिमानि दाडिमीबीजानि ।

**मधुमङ्गलः**—भो विन्दावणविहप्पए, दाडिमीबीअहिन्तोवि सुट्ठु कन्तं ललिदाए दन्तपत्तिं दे दाइस्सम् ।

(पुनर्नेपथ्ये ।)

चञ्चलसंझाघण विअ मुहुत्तराअं तणोदि दे सामी ।
वहइ सिणेहं राही केअल णअणीअपुत्तीव ॥ ३७ ॥

---

१ विहङ्गपुंगव, चतुर्दशविद्याविचक्षणो दीर्घायुर्भव ।

२ हण्डे चण्डालकीर, प्रचण्डशशादनतुण्डराहोः प्राघुणो भवतु ते पिण्डशशी ।

३ भो वृन्दावनबृहस्पते, दाडिमीबीजेभ्योऽपि सुष्ठु कान्तां ललिताया दन्तपङ्क्तिं ते दास्यामि ।

४ चञ्चलसंध्याघन इव मुहूर्तरागं तनोति ते स्वामी ।
वहति स्नेहं राधा केवलं नवनीतपुत्रीव ॥

---

दुःखेनावच्छन्नसंगमः प्राप्तिर्यासाम् । एवं च कस्तूरिकावृत्तिः । दाक्षिण्यतः दक्षिणदेशोद्भवत्वात्, आनुकूल्याच्च । सर्वसुलभत्वमनुरञ्जकत्वं चेति वासन्तवायोर्गुणद्वयं कृष्णे वर्तते ॥ हण्डे इति निकृष्टसंबोधने । 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । चण्डालश्चासौ कीरश्चेति कर्मधारयः । शशादनः श्येनः ।

**ललिता**—(सानन्दम् ।) सहि सारिए, सोहग्गवदी होहि । जं पच्चुत्तरेण णिज्जिदो तुए दुम्मुहो कीरो ।

**कृष्णः**—(स्वगतम् ।) ध्रुवं वृन्दयेदमध्यापितकौशलं विहङ्गयोर्द्वन्द्वम् ।

**मधुमङ्गलः**—(सक्रोधम् ।) हंञ्जे, भञ्जेमि दे तिक्खजप्पिणं चञ्चुपुडम् ।

(इति सव्याजं दण्डं क्षिपति ।)

**राधिका**—हन्त, कधं उड्डीणं वावदूअं विहङ्गमिहुणम् ।

**कृष्णः**—(राधामवेक्ष्य ।)

सेवन्ते तरुरोहिनः सुमनसां वृन्दैर्मधुस्यन्दिभि-
यंत्रोत्फुल्ललतावधूभिरभितः संगत्य भृङ्गातिथीन् ।
संवीता पशुभिस्तथा खगकुलैः खेलद्भिरव्याहतं
न स्यात्कस्य सुकण्ठि सेयमधिकानन्दाय वृन्दाटवी ॥३८॥

अथवा ।

हरिणीर्विडम्बयसि नेत्रखेलया ललितैर्लतापिककुलं कलोक्तिभिः ।
शिखिनश्च कुन्तलकलापविभ्रमैरिति ते पुरः किमिव मे वनश्रिया॥३९॥

---

१ सखि सारिके, सौभाग्यवती भव । यत्प्रत्युत्तरेण निर्जितस्त्वया दुर्मुखः कीरः ।

२ हण्डे, भनज्मि ते तीक्ष्णजल्पि चञ्चुपुटम् ।

३ हन्त, कथमुड्डीनं वावदूकं विहङ्गमिथुनम् ।

---

प्राघुणोऽतिथिः ॥ हञ्जे हे चेटि ॥ **सेवन्त इति** । सुमनसां पुष्पाणाम् । यत्र यस्यां वृन्दाटव्याम् । उत्फुल्ललतावधूभिः संगत्य । उत्फुल्लेति तासामप्यतिथिसेवायामौत्सुक्यं ध्वनितम् । अव्याहतं यथा स्यात्तथा खेलद्भिः । हे सुकण्ठि, तरुलतादीनां भृङ्गागानप्रियत्वं त्वयावगम्यत एवेति भावः ॥ **हरिणीरिति** । ते तव पुरतः

**वृन्दा**—पश्य पश्य।

विरतोर्मिरियं सुनीरजा धृतशुद्धोज्ज्वलसत्त्वसंततिः।
स्फुटकृष्णरुचिर्यमादृता मुनिगोष्ठीव चकास्ति भानुजा॥४०॥

**कृष्णः**—प्रिये, पश्य पश्य।

सितरुचिविराजितं ते मुखमिव नीराजयत्यधीराक्षि।
नीरजबान्धवदुहितुर्नीरजराजी मरुद्भ्रमिता॥ ४१॥

**वृन्दा**—(परिक्रम्य। नीरजान्याहृत्य च।) पुण्डरीकाक्ष, स्तोकोत्फुल्लमिदं गृहाण लीलापुण्डरीकम्। तथावतंसोचितं कोकनदद्वन्द्वम्।

**कृष्णः**—(सहर्षमादाय।) वृन्दे, रक्तोत्पले राधाकर्णयोराधानेन श्रियं लभताम्। (इति तथा कृत्वा। सकौतुकम्।) हन्त, पुण्डरीककोषे चञ्चरीको वर्तते।

**वृन्दा**—

मधुपः कमलेन सार्धमुद्यन्मकरन्देन मुकुन्दमाससाद।
सरसेषु विनिर्मितो हि सङ्गः परमानन्दभरोन्नतिं तनोति॥४२॥

---

वनशोभया मे मम किं कार्यम्। ततोऽप्यधिकशोभावत्वादिति भावः। तदेवाह—**हरिणीर्विडम्बयसीत्यादि॥ विरतेति।** विरता अपगता ऊर्मयस्तरङ्गाः, कामक्रोधाद्याश्च यस्याः। सुष्ठु नीरजानि कमलानि यस्याम्, रजोगुणरहिता च। सत्त्वसंततिर्जीवसमूहः, सत्त्वगुणश्रेणी च। स्फुटं कृष्णा श्यामा, कृष्णे च रुचिर्यस्याः। यमेन स्वभ्रात्रा, यमैश्चाहिंसादिभिरादृता मानिता॥ **सितेति।** मरुद्भ्रमिता नीरजराजी ते मुखं नीराजयतीवेत्युत्प्रेक्षा॥ **वृन्दे इत्यादि।** 'रक्तोत्पलं कोकनदम्' इत्यमरः। **मधुप इति।** कमलेन सार्धं वसन् मधुप इत्यर्थः। अर्थान्तरन्यासमाह—हि यस्मात्सरसेषु भक्तेषु प्रकटे मकरन्दरूपरसयुक्तेषु कमलेषु॥

**कृष्णः**—प्रिये, पश्य पश्य ।

अस्मिन्मदीयकरसङ्गिनि पुण्डरीक-
कोशे क्षणं किल विलम्ब्य शिलीमुखोऽयम् ।
कर्णावलम्बि तव कोकनदं प्रपेदे
कं वा बलान्न हि हरत्यनुरागलक्ष्मीः ॥ ४३ ॥

(राधिका संभ्रमं नाटयन्ती भुजलतां क्षिपति ।)

**कृष्णः**—(स्फुटं विहस्य ।)

कर्णोत्तंसितरक्तपङ्कजजुषो भृङ्गीपतेर्झंक्रिया-
भ्रान्तेनाद्य दृगञ्चलेन दधती भृङ्गावलीविभ्रमम् ।
त्रासान्दोलितदोर्लतान्तविचलच्चूडाझणत्कारिणी
राधे व्याकुलतां गतापि भवती मोदं ममाधास्यति ॥ ४४ ॥

**राधिका**—(सत्रासं चेलाञ्चलमुदञ्चयन्ती ।) [1]कधं अज्जवि ण चलदि घिट्ठो ।

**कृष्णः**—

मधुराक्षि मुधाथ संभ्रमेण क्षिप चेलाञ्चलमञ्जसा न भूयः ।
पिबतु श्रवणोत्पलोद्भूतं ते मधुपोऽयं मधुमङ्गलं कृशाङ्गि ॥ ४५ ॥

---

१ कथमद्यापि न चलति धृष्टः ।

---

**प्रिये इत्यादि** । शिलीमुखो भ्रमरः । 'अलिबाणौ शिलीमुखौ' इत्यमरः । अनुरागलक्ष्मीः, पक्षे कोकनदस्यरक्तिमशोभा । **कं वेति** । अस्मानेव केवलं हरतीति न वक्तव्यमिति भावः ॥ **कर्णेत्ति** । हे राधे, व्याकुलतां गतापि भवती मम मोदमाधास्यति करोति । तव व्याकुलत्वेनापि ममानन्द एवाभ्यस्तो भवतीत्यर्थः । कीदृशी भवती । कर्णोत्पलसेविनो भ्रमरस्य झंकारैर्भ्रान्तेनेतस्ततश्चकितचकितं प्रसरता दृगञ्चलेन भृङ्गसमूहविभ्रमं दधती त्रासेनान्दोलितयोर्दोर्लतयोरन्ते विचल-

**मधुमङ्गलः**—[1]भो वअस्स, कीस बम्हणं मं महुवेण विवाएसि। (इति दण्डेन भ्रमरं ताडयति।)

**राधिका**—(सश्लाघम्।) [2]अज्ज, पिअंकरो ममासि संवुत्तः।

**मधुमङ्गलः**—[3]कहं महुसूअणो तक्कालं जेव तिरोहिदो, जं कुदो वि ण लक्खीअदि।

**राधिका**—(सव्यामोहम्।) [4]हद्धी हद्धी। कहिं गदो महुमहणो। (इति संस्कृतेन।)

समजनि दवाद्वित्रस्तानां किमार्तरवो गवां
मयि किमभवद्वैगुण्यं वा निरङ्कुशमीक्षितम्।
व्यरचि निभृतं किं वा हूतिः कयाचिदभीष्टया
यदिह सहसा मामत्याक्षीद्वने वनजेक्षणः॥ ४६॥

(कृष्णः संज्ञया सर्वान्निवार्य स्मितं करोति।)

**राधिका**—हन्त। (संस्कृतेन।)

वासन्तीभिरयं न मे कचभरः कंसारिणोत्तंसित-
स्तस्योरस्थलचुम्बिचम्पकमयैर्नागुम्फि माल्यं मया।

---

१ भो वयस्य, कस्माद्ब्राह्मणं मां मधुपेन विपाययसि।
२ आर्य, प्रियंकरो ममासि संवृत्तः।
३ कथं मधुसूदनस्तत्कालमेव तिरोहितः, यत्कुतोऽपि न लक्ष्यते।
४ हा धिक् हा धिक्। कुत्र गतो मधुमथनः।

---

न्तीनां चूडानां क्षणत्कारवती॥ **भो वअस्सेति**। विपाययसि। खादयसीत्यर्थः। पूर्वपदस्य मधुमङ्गलेनायमर्थः कृतः—श्रवणोत्पलादुद्भूतं सचेलाञ्चलं भूयो मा क्षिप। अयं मधुपः मधुमङ्गलं तन्नामविप्रं पिबतु खादतु इति॥ **कहमिति**। मधुसूदनो भ्रमरः॥ **हद्धीत्यादिभिर्मधुसूदनशब्दार्थं** कृष्णमभिप्रेत्य विच्छेदनायन्त्यास्तस्या जातं प्रेमवैचित्र्यं वर्णयति—कुत्रगतो मधुमथनः कृष्ण इति। **समजनीति**। मयि निरङ्कुशवाम्यादिलक्षणं वैगुण्यं वेक्षितम्। हूतिराकारणम्। अभीष्टया कयाचिद्वनितया। दवो वनवह्निः॥ **वासन्तीभिरिति**। चम्पकमयैश्चम्पकैः। स्वरूपे मयट्॥

मल्लीभिश्च निरर्गलं परिहसन्नायं बलात्ताडितः
प्रारम्भेऽद्य वनोत्सवस्य विरहच्छद्मादयः प्रोदगात् ॥ ४७ ॥

**वृन्दा**—(अपवार्य ।) काममन्धकारिणी प्रेमबन्धकन्दली या खलु विस्पष्टमपि नानुसंधापयति ।

**राधिका**—सहि वुन्दे, रक्खेहि मम् । (इति त्रासं नाटयन्ती ।)

सप्पा सप्पइ भिङ्गपन्तिमिसदो काली रसालङ्कुरे
रत्तासोअसिरे विरेहइ तधा पुप्फच्छलादो सिही ।
सिङ्गे केसुअसाहिणो अ कलिआदम्भेण संभेदिणी
मं भेत्तुं कुसुमाउहस्स वलइ कूराद्धचन्दाअली ॥ ४८ ॥

(इति वैवश्यं नाटयति ।)

**कृष्णः**—(संभ्रमादभ्युपेत्य पाणिं गृह्णन्नुच्चैः ।) सुकुमारि, किमकाण्डे कातरासि । यतः ।

त्वन्मुखलक्ष्मीग्लपिता चन्द्रावलिरिह बिभेति पूर्णापि ।
प्रणयाधे तव कर्तुं किमर्धचन्द्रावली क्षमते ॥ ४९ ॥

**राधिका**—(सधैर्यं लज्जां नाटयन्ती स्वगतम् ।) कधं अच्छिलम्गं च्चेअ हारिदं मणन्ती खिण्णम्हि ।

---

१ सखि वृन्दे, रक्षय माम् ।
सर्पी सर्पति भृङ्गपङ्क्तिमिषतः काली रसालाङ्कुरे
रक्ताशोकशिरसि विराजति तथा पुष्पच्छलाच्छिखी ।
शृङ्गे किंशुकशाखिनश्च कलिकादम्भेन संभेदिनी
मां भेत्तुं कुसुमायुधस्य बलते क्रूरार्धचन्द्रावली ॥

२ कथमक्षिलग्नमेव हारितं मन्यमाना खिन्नास्मि ।

---

**काममिति** । प्रेमबन्धस्य कन्दली समूहः । अन्धकारिणीति 'आढ्यसुभग-' इत्यादिना ख्युन्प्रत्ययान्तम् ॥ **सप्पा इति** । काली श्यामवर्णा । शिखी अग्निः । 'शिखिनौ वह्निबर्हिणौ' इत्यमरः । किंशुकशाखिनः पलाशवृक्षस्य । अर्धचन्द्रो

**कृष्णः**—प्रिये, पश्य पश्य ।

परिणतवरबीजस्पर्धिदन्तोरुभासः
कुसुममुपहसन्त्यास्तन्वि दन्तच्छदेन ।
फलविजयिकुचायास्त्वद्भयाद्दाडिमीयं
मृदुलपवनदोलादम्भतः कम्पतेऽद्य ॥ ५० ॥

**वृन्दा**—सखि, निर्वर्णय तव कर्णिकोचितकोरकं कर्णिकारमनुम् ।

**राधिका**—

[1]णअकण्णिआरकुसुमे भसलो रसलोहणिच्चलो भोदि ।

**कृष्णः**—

काञ्चनमञ्चनिविष्टो रसराजोऽयं शरीरीव ॥ ५१ ॥

**राधिका**—पेक्[2]ख पेक्ख । (संस्कृतेन ।)

उद्धुरमरन्दमत्ता रुद्धे सारेण गन्धविसरेण ।
इह सुन्दर मल्लिगणे रोलम्बा हन्त गुञ्जन्ति ॥ ५२ ॥

(कृष्णः 'उद्धुरमरन्द–' इत्यादि पठति ।)

**वृन्दा**—

पीतातिसूक्ष्मशिखरा चम्पककलिकेयमाभाति ।

---

१ नवकर्णिकारकुसुमे भसलो रसलोभनिश्चलो भवति ।
२ प्रेक्षस्व प्रेक्षस्व ।

---

नामाख्यविशेषः । चन्द्रावलीपक्षे तन्नाम्नी यूथेश्वरी ॥ **परिणतेति** । परिणतानां वरबीजानां स्पर्धिन्यो दन्तानामुरुभासः श्रेष्ठकान्तयो यस्यास्तथाभूतायाः । त्वत्तः सकाशाद्यद्भयं तस्मात् । दन्तच्छदेनाधरेण । मृदुलपवनांदोलनच्छलेन । **णअकण्णिआरेति** । भसलो भ्रमरः ॥ काञ्चनेत्याद्युत्तरार्धं पूरयन्नात्मनो द्रुतकवित्वं व्यनक्ति कृष्णः । रसराजः शृङ्गाररस्तस्य श्यामवर्णत्वादुत्प्रेक्षा ॥ **उद्धुरेति** । मल्लिगणे कीदृशे । सारेण श्रेष्ठेन गन्धसमूहेन रुद्धे । इत्येकदेशोच्चरितेन राधयापि द्रुतकवित्वं

**कृष्णः**—

मानवतीहृन्मथिनी हैमी कामस्य शक्तिरिव ॥ ५३ ॥

**मधुमङ्गलः**—[१]भो वअस्स, एसा कामस्स सत्ती ण होइ । पेक्ख जडिलाखित्ता सा हरिआलगोरी लउडिआ ।

(प्रविश्य ।)

**जटिला**—[२]अरे जम्ह बम्हण, एत्थ लगुडी मए विसुमरिदा ।

**राधिका**—(अपवार्य । सभयम् ।) [३]सहि, परित्ताहि परित्ताहि । एसा कालरत्तीव दारुणा वुड्ढी मं दिट्ठवदी ।

(इति ललितावृन्दाभ्यां निष्क्रान्ता ।)

**कृष्णः**—(अपवार्य ।)

मम संगमामृतरसं न जिघृक्षति न च जिहासति प्रकटम् ।
जटिलाव्याघ्रीचकिता तृषिता राधाकुरङ्गीयम् ॥ ५४ ॥

**मधुमङ्गलः**—[४]भो सरमालाङ्गूलकुटिले, घेप्प अप्पणो जुट्ठिम् ।

**जटिला**—(यष्टिमादाय ।) [५]अरे सुअल, कीस तुमं बहुडिआवेसेण मं सदा विडम्बेसि ।

---

१ भो वयस्य, एषा कामस्य शक्तिर्न भवति । पश्य जटिलाक्षिप्ता सा हरितालगौरी लकुटिका ।

२ अरे कुटिल ब्राह्मण, अत्र लगुडी मया विस्मृता ।

३ सखि, परित्राहि परित्राहि । एषा कालरात्रीव दारुणा वृद्धा मां दृष्टवती ।

४ भो सरमालाङ्गूलकुटिले, गृहाणात्मनो लगुडीम् ।

५ अरे सुबल, कस्मात्त्वं वधूटिकावेशेन मां सदा विडम्बयसि ।

---

व्यञ्जितम् । ततश्च कृष्णस्य पुनः पद्यस्य प्राचीनत्वव्यञ्जनायाथवा तस्य श्रुतधरत्वज्ञापनाय ॥ **अरे इति** । पूर्वं लकुटिं क्षिपन्ती परुषं गर्जन्तीत्युक्तत्वात् ॥ **भो सरमालाङ्गूलेति** । सरमा शुनी ॥ **दिट्ठेति** । साधयति गच्छति । नाथ्योक्तौ साधयति । गच्छत्यर्थः ॥ इति विदग्धमाधवे पञ्चमोऽङ्कः ॥

**कृष्णः**—(स्वगतम्।) दिष्ट्या सुबलतया ज्ञातमभूत्। (प्रकाशम्। सनर्मस्मितम्।) जटिले, गुरुभ्यः शपमानोऽस्मि। राधिकैव साधयति। न खल्वसौ सुबलः।

**जटिला**—रे [1]धुत्तविअक्खण, हं सव्वं परीक्खिदुं खमम्हि। ता अलं एत्थ ठगत्तणेण।

(इति निष्क्रान्ता।)

**कृष्णः**—सखे, समागच्छ। गोकुलमेव प्रविशावः।

(इति निष्क्रान्तौ।)

(इति निष्क्रान्ताः सर्वे।)

इति राधाप्रसादनो नाम पञ्चमोऽङ्कः।

---

## षष्ठोऽङ्कः।

(ततः प्रविशति जटिला।)

**जटिला**—[2]सुदं मए अज्ज पीअपडेण किदुत्तरीआ वहू घरे चिट्ठइ। ता गदुअ जहत्थं णिद्धारइस्सम्। (परिक्रम्य पश्यन्ती।) कधं एसा विसाहा घुम्मिअ घुम्मिअ अलिन्दे पडइ। ता सद्दाइस्सम्। (इत्युपसृत्य।) विसाहे, जादो एक्कपहरो तहवि घुम्मसि।

---

१ रे धूर्तविचक्षण, अहं सर्वं परीक्षितुं क्षमास्मि। तस्मादलमत्र ठगत्वेन।

२ श्रुतं मयाद्य पीतपटेन कृतोत्तरीया वधूर्गृहे तिष्ठति। तद्गत्वा यथार्थं निर्धारयिष्यामि। कथमेषा विशाखा भ्रान्त्वा भ्रान्त्वा अलिन्दे पतति। तच्छब्दायिष्ये। विशाखे, जात एकप्रहरस्तथापि भ्रमसि।

---

वासन्तत्रिचतुरदिनलीलादिग्दर्शनं समाप्य संप्रति शारदलीलया महारासविलासादिभिरतिदुष्पारत्वात्तद्वर्णनेन ग्रन्थगौरवमवधार्य तत्र चित्तप्रवेशार्थं दिनार्धमात्रलीलामुपष्टम्भयति—**ततः प्रविशतीत्यादिना** यावदङ्कसमाप्ति॥ **सुद-**

(प्रविश्य।)

**विशाखा**—(स्वगतम्।) संपदं रासमहूसवगब्भासु सव्वरीसु कुदो णिद्दागन्धोवि अम्हाणम्। ता जुत्तं जेव घुम्मणम्। (इति हठादृशौ विकाश्य। प्रकाशम्।) अज्जे, अज्ज भअवदीए णिदेसेण देअदाअदणे अम्हे दिण्णजाअरम्ह।

**जटिला**—(स्वगतम्।) अहो जेव पदोसे वहूए सेज्जा सुणा आसि। (प्रकाशम्।) विसाहे, आआरेहि वहूअम्।

**विशाखा**—हला राहे, इदो इदो।

(प्रविश्य।)

**राधा**—(चक्षुषी विमृज्य। सजृम्भम्।) विसाहे, बाढं णिद्दाउलम्हि। (इति दृष्टिं दरोद्घाट्य सशङ्कं स्वगतम्।) कधं इध जेव अज्जा।

**जटिला**—(राधां निर्वर्ण्य। स्वगतम्।) हद्धी हद्धी। सच्चं जेव्व एदं पीअम्बरम्।

**राधिका**—(जनान्तिकम्।) हला, सुदं मए सारङ्गीमुहादो जं

---

१ सांप्रतं रासमहोत्सवगर्भासु शर्वरीषु कुतो निद्रागन्धोऽप्यस्माकम्। तद्युक्तमेव भ्रमणम्। आर्ये, अद्य भगवत्या निदेशेन देवतायतने वयं दत्तजागराः स्मः।

२ अत एव प्रदोषे वध्वाः शय्या शून्यासीत्। विशाखे, आकारय वधूम्।

३ सखि राधे, इत इतः।

४ विशाखे, बाढं निद्राकुलास्मि। कथमित एव आर्या।

५ हा धिक् हा धिक्। सत्यमेवेदं पीताम्बरम्।

६ हला, श्रुतं मया सारङ्गीमुखाद्यन्निशीथे वृद्धया तस्मिन्विलासपुलिने गतमासीत्। तन्नूनं वयं तत्र दृष्टाः स्मः।

---

**मिति**। अलिन्दे गृहस्य बहिर्द्वारप्रकोष्ठे॥ प्रदोषे निशादौ। **हलेति**। निशीथे

णिसीवे बुड्ढिआए तस्सिं विलासपुलिणे गदं आसि। ता णूणं म्हे तत्थ दिट्ठम्हि।

**विशाखा**—णंहु णहु[1]। जं कधिदं वुन्दाए तुमं घेत्तूण तिरोहिदे कण्हे तधा अम्हेसु दोसु सहीसु ससङ्कं तुह उद्देसस्स गदासु एसा बुड्ढी उवत्थिदा।

**राधिका**—तदो[2] कीस इअं कोहभअंकरीए मं पेक्खन्ती चिट्ठदि।

**जटिला**—(सेर्ष्यम्।) मिच्छाजप्पिणि[3] विसाहे, किं णाम अन्धासि तुमम्।

**विशाखा**—(राधां विलोक्य। सखेदम्। जनान्तिकम्।) अइ विला[4]सविम्हले, किं क्खु इदम्।

**राधिका**—(स्वं वक्षो निरीक्ष्य ससंभ्रमम्।) हला[5], तुमं जेव्व सरणम्।

**विशाखा**—(जटिलामवेक्ष्य। संस्कृतेन।)

मुदा क्षिप्तैः पर्वोत्तरलहृदयाभिर्युवतिभिः
पयःपूरैः पीतीकृतमतिहरिद्राद्रवमयैः।
दुकूलं दोर्मूलोपरि परिदधानां प्रियसखीं
कथं राधामार्ये कुटिलितदृगन्तं कलयसि॥ १॥

---

१ न खलु न खलु। यत्कथितं वृन्दया त्वां गृहीत्वा तिरोहिते कृष्णे तथावयोर्द्वयोः सख्योः सशङ्कं तवोद्देशाय गतयोः सतोरेषा वृद्धा उपस्थिता।

२ तदा कस्मादियं कोपभयंकरी मां पश्यन्ती तिष्ठति।

३ मिथ्याजल्पिनि विशाखे, किं नामान्धासि त्वम्।

४ अयि विलासविह्वले, किं खल्विदम्।

५ हला, त्वमेव शरणम्।

---

अर्धरात्रे॥ **मुदेति**। युवतिभिः क्षिप्तैः पयःपूरैः पीतीकृतं दुकूलं परिदधानाम्।

**जटिला**—(सविस्मयम् ।) विसाहे, तुए ज्जेव्व चञ्चलाए मम पुत्तघरं विणासिदम्, जं जोव्वणन्धाणं गोईणं मज्झे वहुडीअ णिज्जइ।

**विशाखा**—अंज्जे, किं ति मं उवालहेसि । णं उवसण्णं दीवमालिआपव्वलच्छीं उवालहेहि, जाए सव्वं आबालवुड्ढं गोउलं ज्जेव्व उम्मादिदम् ।

**जटिला**—वंत्से, सच्चं कहेसि । अज्ज रत्तिम्मि दिट्ठं मए सव्वाओ गोउलकिसोरीओ तत्थ पुलिणे उम्मत्तीभविअ किंपि किंपि चिट्ठन्दि ।

(विशाखा सहस्रभङ्गं राधिकामीक्षते ।)

**जटिला**—(सदैन्यम् ।) अंइ विसाहे, पसीद पसीद । एसा अङ्गुलिसिहरं मुहे णिक्खिविअ अब्भत्थेमि । ता मइ एक्कं अणुग्गहं करेहि ।

**विशाखा**—(सप्रश्रयम् ।) अंज्जे, किंति एव्वं भणासि । णिकामं आणवेहि ।

**जटिला**—वंच्छे, तुमं विसुद्धासि । ता कण्हहत्थादो रक्खेहि वहूडिअम् ।

---

१ विशाखे, त्वयैव चञ्चलया मम पुत्रगृहं विनाशितम्, यद्यौवनान्धानां गोपिकानां मध्ये वधूटी नीयते ।

२ आर्ये, किमिति मामुपालभसे । इमामुपसन्नां दीपमालिकापर्वलक्ष्मीमुपालभस्व, यया सर्वमाबालवृद्धं गोकुलमेवोन्मादितम् ।

३ वत्से, सत्यं कथयसि । अद्य रात्रौ दृष्टं मया सर्वा गोकुलकिशोर्यस्तत्र पुलिने उन्मत्तीभूय किमपि किमपि चेष्टन्ते ।

४ अयि विशाखे, प्रसीद प्रसीद । एषा अङ्गुलिशिखरं मुखे निक्षिप्य अभ्यर्थयामि । तन्मय्येकमनुग्रहं कुरु ।

५ आर्ये, किमित्येवं भणसि । निकाममाज्ञापय ।

६ वत्से, त्वं विशुद्धासि । तत्कृष्णहस्ततो रक्ष वधूटिकाम् ।

---

क । दोर्मूलोपरि कुटिलितदगन्तं यथा स्यात्तथा किं पश्यति । अञ्जोति । दक्षा

विशाखा—[1]अज्जे णिचिन्ता होहि, जं ललिदा क्खु एत्थ दक्खा विअक्खणा अ ।

जटिला—[2]कहिं गदा ललिदा ।

विशाखा—[3]पेक्ख । पउमाए समं इदो जेव एसा आअच्छदि ।

जटिला—[4]अहं उप्पलिआनिप्पादणस्स गमिस्सम् । (इति निष्क्रान्ता ।)

(प्रविश्य पद्मया सह ।)

ललिता—[5]सहि पउमे, कुदो आअच्छसि ।

पद्मा—[6]हला, कण्हस्स सआसादो ।

ललिता—[7]कहिं कण्हो ।

पद्मा—[8]मालतीवाटिआपेरन्ते ।

ललिता—[9]किं कुणदि ।

पद्मा—[10]महुमङ्गलदुदिओ विहरदि ।

ललिता—(सपरिहासस्मितम् ।) [11]हला, किं णाम संपूरिदाहिट्ठासि ।

---

१ आर्ये, निश्चिन्ता भव, यल्ललिता खल्वत्र दक्षा विचक्षणा च ।
२ कुत्र गता ललिता ।
३ पश्य । पद्मया सममित एवैषा आगच्छति ।
४ अहमुत्पलिकानिष्पादनाय गमिष्यामि ।
५ सखि पद्मे, कुत आगच्छसि ।
६ सखि, कृष्णस्य सकाशात् ।
७ कुत्र कृष्णः ।
८ मालतीवाटिकाप्रान्ते ।
९ किं करोति ।
१० मधुमङ्गलद्वितीयो विहरति ।
११ सखि, किं नाम संपूरिताभीष्टासि ।

---

चतुरा । विचक्षणा परमविज्ञा च ॥ **अहमिति** । उत्पलिका गोमयपिण्डिका ॥ **सखीति** । संपूरिताभीष्टासीति रतं व्यज्यते । अस्याः प्रातरेवात्रागमनं ललितया

**पद्मा**—(विहस्य ।) मा अण्णधा संभावेहि । मए मालदीसेहरो एक्को गण्ठिअ तस्स उवहारीकिदो । (स्मृतिमभिनीय ।) हला, कधिदं मे कण्हेण—'पउमे, तुमं जधा संतदं मालं समप्पेसि, एव्वं ललिदा वि मे विचित्तधाउलच्छीम् । ता एसा मे लेहपत्तिआ तुए तिस्सा हत्थे देआ' त्ति । (इति पत्रिकामर्पयति ।)

**ललिता**—(गृहीत्वा स्वगतम् ।) कदा वि कण्हस्स मए धाउराओ ण समप्पिदोत्थि । ता एत्थ अवरेण केणावि रहस्सेण होदव्वम् । (इति प्रकाशं पत्रिकां वाचयति ।)

'त्वया मुक्तगिरिः पाणौ ममातुच्छपदस्थितिः ।
निधीयतामधीराक्षि रागिधातुपरिच्छदः ॥ २ ॥

(इति क्षणं विमृश्य स्वगतम् । राधा मम पाणौ निधीयताम् ।) एव्वं संकेदेण इमिणा आणत्तम् । (प्रकाशम् ।) सहि, तथा करिस्सम् । ता अग्गदो राहिअं आपुच्छिअ साहेहि ।

**पद्मा**—(राधिकामुपेत्य सनर्मस्मितम् ।) हला राहे, दिट्ठिआ णिव्वि-

---

१ मा अन्यथा संभावय । मया मालतीशेखर एको ग्रथित्वा तस्योपहारीकृतः । सखि, कथितं मे कृष्णेन—'पद्मे, त्वं यथा संततं मालां समर्पयसि, एवं ललितापि मे विचित्रधातुलक्ष्मीम् । तदेषा मम लेखपत्रिका त्वया तस्या हस्ते देया' इति ।

२ कदापि कृष्णस्य मया धातुरागो न समर्पितोऽस्ति । तदत्रापरेण केनापि रहस्येन भवितव्यम् । एवं संकेतेनानेनाज्ञप्तम् । सखि, तथा करिष्यामि । तदग्रतो राधिकामापृच्छ्य साधय ।

३ सखि राधे, दिष्ट्या निर्विवादं जातम् । यथा गोकुलेन्द्रनन्दनेनास्माकमंशुकान्यपहृतानि तथास्माभिरपि तस्येदं पीतांशुकम् ।

---

सह संवादेच्छा च जटिलाक्रियमाणतिरस्कारदुःखदर्शनाभिलाषा ॥ **विमृश्येति ।**

वादं जादम्। जधा गोउलिन्दणन्दणेण अम्हाणं अंशुआइं अवहरिदाइं तधा अम्हेहिं पि तस्स इदं पीदंसुअम्।

ललिता—(स्मित्वा।) अइ णिल्लज्जि, कुङ्कुमपङ्कपिञ्जरिदं पिअसहीए उत्तरीअं पेक्खिअ किंति अणत्थं आसङ्कसि।

पद्मा—(सस्मितम्।) हंला राहे, अणुजाणीहि मम्। तुरिअं सहित्थलीं गदुअ कण्हस्स लीलं गाअन्तीं पिअसहीं चन्दाअलिअं सुहाविइस्सम्।

विशाखा—(विहस्य।) पउमे, धण्णाओ तुम्हे। जाहिं अदंसणे वि कण्हस्स विलासगीदीहिं णिअसही चन्दाअली सुहावीअदि।

पद्मा—विसाहे, तुम्हेहिं कीस तधा ण किज्जइ।

विशाखा—अइ, कुदो अम्हाणं इदि संभाव्वेअम्।

---

१ अयि निर्लज्जे, कुङ्कुमपङ्कपिञ्जरितं प्रियसख्या उत्तरीयं प्रेक्ष्य किमित्यनर्थं आशङ्कसि।

२ सखि राधे, अनुज्ञापय माम्। त्वरितं सखीस्थलीं गत्वा कृष्णस्य लीलां गायन्तीं प्रियसखीं चन्द्रावलीं सुखयिष्यामि।

३ पद्मे, धन्या यूयम्। याभिरदर्शनेऽपि कृष्णस्य विलासगीतैर्निजसखी चन्द्रावली सुखायते।

४ विशाखे, युष्माभिः कस्मात्तथा न क्रियते।

५ अयि, कुतोऽस्माकमिति संभाव्यम्।

---

अयमत्र विमर्शः—त्वया मम पाणौ रागिधातुपरिच्छदो निधीयताम्। कीदृशः। मुक्तगिरिः मुक्तो गिरेः सकाशादिति राजदन्तादिः। यद्वा मुक्तो गिरिर्येन स पर्वतादवचिलेत्यर्थः। अतुच्छपदस्थितिः न तुच्छे पदे पर्वताधःप्रान्तादौ स्थितिर्यस्य। शङ्गस्य इत्यर्थः। अयं प्रकटोऽर्थः पद्माप्रतारणाय। गूढस्तु रागिधातुपरिच्छद इत्यक्षराष्टकरूपशब्दः। कीदृशः। मुक्तौ त्यक्तौ गिकाररिकारौ येन। न विद्यते तुच्छपदानां तुकारच्छकारपकारदकाराणां स्थितिर्यत्र। ततश्च 'राधा' इत्यक्षरद्वयं

**पद्मा**—हला, कथं णत्थि ।

**विशाखा**—मुद्धे, कण्हस्स णाममेत्ते पत्थुदे सही राहिआ विक्खुब्भदि ।

**पद्मा**—(स्वगतम् ।) सपक्खे पेमुक्करिसो इमाए विक्खाविदो । होदु । (प्रकाशम् ।) विसाहे, तुम्हे ज्जेव्व सुट्ठु सुहिणीओ । अम्हाणं क्खु कावि दुक्खदसा अणुवट्टदि ।

**ललिता**—पउमे, ण क्खु तुम्हाणं किंपि दुक्खं संभाविअदि ।

**पद्मा**—ललिदे, मा एव्वं भण । जं हारगण्ठणकेसपसाहणबिम्बाहररञ्जणपहुदीए चन्दाअलीए णेवच्छाइं सव्वदा कुणन्तीणं अम्हाणं दुक्खजालस्स अन्तो णत्थि ।

---

१ सखि, कथं नास्ति ।

२ मुग्धे, कृष्णस्य नाममात्रे प्रस्तुते सखी राधिका विक्षुभ्यति ।

३ स्वपक्षे प्रेमोत्कर्षोऽनया विख्यापितः । भवतु । विशाखे, यूयमेव सुष्ठु सुखिन्यः । अस्माकं खलु कापि दुःखदशा अनुवर्तते ।

४ पद्मे, न खलु युष्माकं किमपि दुःखं संभाव्यते ।

५ ललिते, मैवं भण । यद्धारग्रथनकेशप्रसाधनबिम्बाधररञ्जनप्रभृतिभिश्चन्द्रावल्या नेपथ्यानि सर्वदा कुर्वन्तीनामस्माकं दुःखजालस्यान्तो नास्ति ।

---

तिष्ठति । विपक्षस्य दूलकरणचातुर्यं सौभाग्यातिशयनिधापनार्थम् ॥ **हलेति** । सखीस्थली नाम सखीधरा इति गोवर्धननिकटवर्ती चन्द्रावल्या ग्रामः ॥ **मुद्धे इति** । कृष्णस्य नाममात्रे प्रस्तुते सखी राधा विक्षुभ्यति । कुतो गीतश्रवणसामर्थ्यम् । चन्द्रावल्यास्तथा प्रेमाभावात्तत्संभवतीति भावः ॥ **ललिदे इति** । अयं भावः—चन्द्रावल्याः सौभाग्यातिरेकादेकस्मिन्नपि दिने बहुशः कृष्णसंभोगेन पुनर्वेशः कर्तव्यो भवति । युष्माकं तु राधायास्तादृशसौभाग्याभावात् कदाचित्केन कृष्णसंभोगेन कदाचिदेव वेशकरणमिति ॥ **विहस्येति** । व्यञ्जयोऽर्थस्त्वयमेव । स

**विशाखा**—(विहस्य ।) हेला पउमे, सच्चं तुम्हाणं बहूइं दुक्खाइं । अम्हाणं उण एक्कं ज्जेव ।

**पद्मा**—हेला, किं तम् ।

**विशाखा**—पउमे, जा कावि मच्चदुलहा आगासतारा पप्फुरदि, तत्थ जादाहिलासस्स कस्सवि कालिन्दीकूलणन्दिणो समदस्स गन्धकलहिन्दस्स सव्वदा अब्भत्थणकदत्थणम् ।

**ललिता**—(स्मित्वा ।) विसाहे, अण्णं पि एक्कं गरुअं दुक्खं तुए कधं विसुमरिदम् ।

---

१ सखि पद्मे, सत्यं युष्माकं बहूनि दुःखानि । अस्माकं पुनरेकमेव ।

२ सखि, किं तत् ।

३ पद्मे, या कापि मर्त्यदुर्लभाकाशतारा प्रस्फुरति, तत्र जाताभिलाषस्य कस्यापि कालिन्दीकूलनन्दिनः समदस्य गन्धकलभेन्द्रस्य सर्वदाभ्यर्थनकदर्थनम् ।

४ विशाखे, अन्यदप्येकं गुरु दुःखं त्वया कथं विस्मृतम् ।

---

त्वस्माभिरपकृष्टत्वेन हस्यत एवेति भावः ॥ **सच्चमिति** । सदा चन्द्रावल्याः कृष्णसंभोग इति भवत्या मिथ्यैव ब्यज्यते यद्यपि सत्यं स्यादस्तु । तदपि राधिकासौभाग्यभानोरग्रे स तु सौभाग्याभासः खद्योतायत इति त्वया ज्ञायतामित्यभिप्रेत्याह—अस्माकं पुनरेकमेवेति ॥ **समदस्येति** । दुर्लभा ममेयमिति परामर्शाभावान्मत्तत्वमेव । गन्धकलभेन्द्रो दुर्वारहस्तिशावकः । अयं भावः—सुलभत्वेन चन्द्रावल्या संभोगः स्याचेदस्तु । अस्माकं राधायां तु संभोगप्रार्थनापि दुःशका । कृष्णस्यातिदुर्लभत्वात् । ततश्च तदर्थमस्मासु राधासखीषु सदाभ्यर्थना तस्य भवति तदपि कदर्थनमस्माभिर्मन्यते ॥ **स्मित्वेति** । विशाखे, सुष्ठु प्रत्युक्तं भवत्या इति भावः । अहमितोऽप्युत्कृष्टकोटिमाविष्कृत्य वराकीमिमां निर्वचनीकरोमीत्यभिप्रेत्याह—**अण्णं पि एकमिति** ॥ **अयीति** । ऋजुस्वभावत्वात् सूक्ष्ममर्थं

**विशाखा**—लैलिदे, किं तं सुमरावेहि ।

**ललिता**—अइ ऋज्जुए, राहाए पाअपल्लअम्मि जावअराअस्स क्खणे क्खणे विरअणम् ।

**विशाखा**—(सहासम् ।) अलीआसङ्किणि ललिदे, विरमेहि विरमेहि । कण्हस्स उत्तमङ्गे ढाउराओ ज्जेव रेहदि, ण क्खु जावआणम् ।

**राधिका**—(सलज्जम् ।) हँला पउमे, इमाणं दुम्मुहीणं पलावं अणाअणिअ तुण्णं पिअसहीं चन्द्राअलिअं ज्जेव जाहि ।

**पद्मा**—जँधा आदिसदि पिअसही । (इति निष्क्रान्ता ।)

**ललिता**—(स्वगतम् ।) एँण्हि कण्हस्स आण्णां करिस्सम् । (प्रकाशम् ।) हला राहे, एहि । पुप्फं अवचिणिअ भअवन्तं सूरं पूएम्ह ।

---

१ ललिते, किं तत्स्मारय ।

२ अयि ऋजुके, राधायाः पादपल्लवे यावकरागस्य क्षणे क्षणे विरचनम् ।

३ अलीकाशङ्किनि ललिते, विरम विरम । कृष्णस्योत्तमाङ्गे धातुराग एव राजते, न खलु यावकानाम् ।

४ सखि पद्मे, आसां दुर्मुखीनां प्रलापमनाकर्ण्य तूर्णं प्रियसखीं चन्द्रावलीमेव याहि ।

५ यथादिशति प्रियसखी ।

६ इदानीं कृष्णस्याज्ञां करिष्यामि । सखि राधे, एहि पुष्पमवचित्य भगवन्तं सूर्यं पूजयाम ।

---

प्रकाश्य नेमां लज्जयसीति भावः । अयं भावः—ततश्च सामदानादिभिश्चाटुपरेण कृष्णेन वशीकृतास्माभिरवकाशे दत्ते राधिकायाः पादयोः प्रणामेन यावकरागः क्षणे क्षणेऽपगतो भवतीति भावः ॥ **सहासमिति** । अथास्याः प्रत्युत्तरस्य का गतिर्भविष्यतीति भावः । कृष्णस्योत्तमाङ्गे धातुरागो राजते, न खलु यावकानामिति प्रकाशितार्थस्य पुनः संगोपनेनाधिकं सनिर्घारं सत्यत्वं व्यञ्जितमिति ॥ **सलज्जमिति** । आत्मयशश्रवणेन ॥ अथेमां निरुत्तरां म्लानमुखीं दृष्ट्वा आह—हला

**राधिका**—(स्वगतम् ।) [1]दिट्ठिआ हिअअट्ठिदो ज्जेव मे कामो इमाए उवणीदो, जं कण्हस्स दंसणं एत्थ संभवे । (प्रकाशम् ।) जधा हि रोअदि पिअसहीए । (इति निष्क्रान्ता ।)

(ततः प्रविशति मधुमङ्गलेनोपास्यमानः कृष्णः ।)

**कृष्णः**—

तव स्तवकवल्लरीचटुलगन्धबन्दीकृत-
भ्रमद्भ्रमरझंकृतिप्लुतमुदग्रगुञ्जार्बुदम् ।
शरत्कृशकलिन्दजापुलिनवृन्दसंवर्धितं
परिस्फुरति चन्द्रकस्थगितमद्य वृन्दावनम् ॥ ३ ॥

(पुनर्निरूप्य । सानन्दम् ।)

शरदि मुखरिताशास्तारनादावलीभि-
र्वलदविचलनेत्राः पश्य वृन्दावनेऽद्य ।
विदधति रणरङ्गं वासिता सङ्गहेतोः
सरभसगुरुशृङ्गैः सङ्गवे पुंगवेन्द्राः ॥ ४ ॥

**मधुमङ्गलः**—(सर्वतो विलोक्य ।)

[2]तुह संगमेण णूणं मुउन्द वुन्दाडई घणच्छाआ ।
उअ दम्भेण कुरण्टअभरस्स पीदम्बरं धरइ ॥ ५ ॥

---

१ दिष्ट्या हृदयस्थित एव मम कामोऽनयोपनीतः, यत्कृष्णस्य दर्शनमत्र संभवेत् । यथा खभिरोचते प्रियसख्यै ।

२ तव संगमेन नूनं मुकुन्द वृन्दाटवी घनच्छाया ।
उत दम्भेन कुरण्टकभरस्य पीताम्बरं धरति ॥

---

**पउमे इत्यादि** ॥ **तवेति** । वायुना चञ्चलगन्धेन बन्दीकृतः बन्दी स्तावकस्तदिव कृतो यो भ्रमद्भ्रमरस्तस्य झंकृत्या प्लुतं व्याप्तम् । अथवा बन्दीकृतो बद्धीकृतः । उदग्राणामुत्कृष्टानां गुञ्जानामर्बुदं यत्र । चन्द्रकैर्मयूरपिच्छैः स्थगितं संवृतम् । व्याप्तमिति यावत् । 'स्थगि संवरणे' धातुः ॥ **शरदीति** । मुखरिता नादिता आशा दिशो यैः । वासिता पुष्पिणी गौः ॥ **तुहेति** । घनच्छायापक्षे

**कृष्णः**—(स्वगतम्।) किमद्य निष्टङ्कितसंकेतलेखार्थया पूर्णमनोरथीकरिष्येऽहं ललितया। हन्त, शारदमाधुरीसंदोहसंदानितापि वृन्दाटवीकक्षा खञ्जनाक्षी विप्रकर्षादानन्दबिन्दुमपि न मे संदधाति। तद्वेणुसंकेतं संचारयामि। (इति तथा कुर्वन्।)

दिव्यो रथाङ्गि समयः सखि संगमस्य
जज्ञे वराङ्गि तरसा कुरु पक्षपातम्।
अध्वानमर्धनयनेन विलोकमानः
शोकादयं सहचरस्तव रौरवीति॥ ६॥

**मधुमङ्गलः**—भो वअस्स, किं एदं अपूव्वं वादिदम्।

**कृष्णः**—सखे, कुरङ्गीलोकनार्थं ममायमुद्यमः।

**मधुमङ्गलः**—सच्चं कधिदम्। किं तु एक्कं अक्खरं अण्णधा किअम्।

**कृष्णः**—सखे, साधु विदितं कुरङ्गीलोचनार्थमेव।

(नेपथ्ये।)

पिबन्तीनां वंशीरवमिह गवां कर्णचुलुकैः
पयःपूरा दूराद्दिशि दिशि तथा शुश्रुवुरमी।
अकाले पुष्पद्भिस्तरुभिरभितः शोभितमिदं
यथा वृन्दारण्यं दधिमयनदीमातृकमभूत्॥ ७॥

---

१ भो वयस्य, किमेतदपूर्वं वादितम्।
२ सत्यं कथितम्। किं त्वेकमक्षरमन्यथा कृतम्।

---

त्वत्सारूप्यप्राप्त्या मेघकान्तिः॥ **किमद्येत्यादि**। संदानिता बद्धा। शरदि यत्र कुत्रापि खञ्जनसंचारं विना शोभैव नोत्पद्यते इति खञ्जनाक्षीपदैकदेशव्यङ्ग्यं वस्तु। हे रथाङ्गि चक्रवाकि, व्यपदेशेन हे राधे। रौरवीति अत्यर्थं जल्पति। रोदितीत्यर्थः॥ **पिबन्तीनामिति**। पयःप्रवाहास्तथा शुश्रुवुर्यथाकालेऽपि पुष्पद्भिस्त-

कृष्णः—सखे, दक्षिणतः पश्य पश्य।

तुङ्गस्ताम्रोरुशृङ्गः स्फुरदरुणखुरो रम्यपिङ्गेक्षणश्रीः
कण्ठव्यालम्बिघण्टो धरणिविलुठितोच्चण्डलाङ्गूलदण्डः।
सोऽयं कैलासपाण्डुद्युतिरतुलककुन्मण्डलो नैचिकीनां
चक्रे भाति प्रियो मे परिमलतुलितोत्फुल्लपद्मः ककुद्मी॥ ८॥

(ततः प्रविशति सखीभ्यामनुगम्यमाना राधा।)

राधा—(स्वगतम्।) जंदो दिसादो वेणुसद्दो आअदो, सा दिसा मोहिदाए मए ण संभाविदा।

ललिता—(सोत्प्रासस्मितम्।) हेला राहिए, कीस अकण्डे हरिणकण्णी तुमं जादासि।

राधिका—ललिदे, किंति अप्पणो धम्मं परस्स अप्पेसि। सच्चं तुमं ज्जेव्व हरिणी, जं कलसद्देण हरिज्जन्ती दीससि।

ललिता—राहे, तुमं क्खु हरिणी, जं रङ्गिणी णाम हरिणी तुम्ह सही।

---

१ यतो दिशातो वेणुशब्द आयातः, सा दिशा मोहितया मया न संभाविता।

२ सखि राधे, कस्मादकाण्डे हरिणकर्णी त्वं जातासि।

३ ललिते, किमित्यात्मनो धर्मं परस्यार्पयसि। सत्यं त्वमेव हरिणी, यत्कलशब्देन हरिष्यमाणा दृश्यसे।

४ राधे, त्वं खलु हरिणी, यद्रङ्गिणी नाम हरिणी तव सखी।

---

रुभिः शोभितं सत् वृन्दारण्यं दधिमयं नदीमातृकमभूत्। अयमर्थः—वंशीश्रवणेन गवां दुग्धप्रवाहास्तरूणां पुष्पाणि च युगपदभूत्। ततश्च पुष्पाणामम्लरससंपर्केण दुग्धानि दधीनि बभूवुरिति। 'पुष्प विकसने' धातुः॥ तुङ्ग इति। परिमलतुलित इति पद्मगन्धनामायं वृषः। तथा ह्युक्तम्—'पद्मगन्धो सुगन्धश्च बलीवर्दाववतिप्रियौ' इति॥ हलेति। सर्पसि। अन्वेषयसीत्यर्थः॥ विसाहे

राधिका—(स्वगतम् ।) [1]दिट्ठिआ एसा कावि सोरब्भधारावाडिआ दोदूदीव्व मं आअट्ठदि । (इति सव्याजं पुरः प्रयाति ।)

विशाखा—(स्मित्वा ।) [2]हला राहि, कीस तुमं भङ्गीव गन्धं सप्पसि ।

राधिका—[3]विसाहे अग्गदो फुल्लाइं कुसुमाइं दीसन्ति । ता एदाइं घेत्तूण तम्मित्तं पूअइस्सम् ।

ललिता—[4]सच्चं मित्तस्स अणुराअं तुमं तरलेदि । सो दाव गहणचरस्स ज्जेव ण क्खु गअणचरस्स ।

राधिका—(सप्रणयरोषम् ।) [5]अइ अदक्खिणे, कमलबन्धुं कधेमि ।

ललिता—[6]सहि, कीस आआरं संगोवेसि ।

विशाखा—[7]ललिदे, सवत्तीभाएण ईसा ब्वेअ संगोवेदि । ण उण अपिसही ।

---

१ दिष्ट्या एषा कापि सौरभ्यधारा वाटिका·········मामाकर्षति ।

२ सखि राधे, कस्मात्त्वं भृङ्गीव गन्धं सर्पसि ।

३ विशाखे, अग्रतो फुल्लानि कुसुमानि दृश्यन्ते । तदेतानि गृहीत्वा तन्मित्रं पूजयिष्ये ।

४ सत्यं मित्रस्यानुरागस्त्वां तरलयति । स तावद्गहनचरस्यैव न खलु गगनचरस्य ।

५ अय्यदक्षिणे, कमलबन्धुं कथयामि ।

६ सखि, कस्मादाकारं संगोपयसि ।

७ ललिते, सपत्नीभावेनेर्ष्येव संगोपयति । न पुनः प्रियसखी ।

---

**इति** । मित्रम् । सूर्यमित्यर्थः ॥ **सहीति** । आकारमिङ्गितं संगोपयसि, पक्षे आ इति अक्षरं संगोपयसि न वदसि । कमलाबन्धुमिति प्रकटं कथं न वदसीत्यर्थः ॥ सपत्नीभावेनेर्ष्येव संगोपयति । न पुनः प्रियसखी । लक्ष्म्या सह सपत्न्या तदीर्ष्यया

**राधा**—(सभ्रूभङ्गम् ।) [1]अइ वामे, अत्तणो हिअअट्ठिदं अत्थं परमुण्डे कीस पाडेसि । ता तुवरेहि । जाणादि दूरे ज्जेव सो तुम्हाणं बिम्बाहरकण्डूखण्डणो ।

**ललिता**—[2]राहे, आकोमारं अम्हाणं अक्खुडिदं कुलङ्गणावदं वुन्दावणलदाओ ज्जेव जाणेन्ति । ता अत्तणो मुहेण किं कधइस्सम्ह ।

**राधिका**—(विहस्य ।) [3]अइ पइव्वदे, जाणेन्ति जाणेन्ति । तदो ज्जेव कल्ले तुह भुअवल्लिणो अङ्के सकंमिदं दिट्ठं मए मअरकुण्डल-लञ्छणं । तधा ज्जेव विसाहाए तत्थ तुलिओवरि क्खुडिदं सिहण्ड-किरीडम् ।

**ललिता**—(स्मित्वा ।) [4]परपरिवादिणि, अवेहि अवेहि ।

**विशाखा**—[5]राहे, किंत्तियं झम्पिस्ससि । ण क्खु चन्दालोए चन्दकन्तसिला अप्पसिण्णा होदुं पहुवदि ।

---

१ अयि वामे, आत्मनो हृदयस्थितमर्थं परमुण्डे कस्मात्पातयसि । तत्त्वरय । जानाति दूर एव स युष्माकं बिम्बाधरकण्डूखण्डनः ।

२ राधे, आकौमारमस्माकमस्खलितं कुलाङ्गनाव्रतं वृन्दावनलता एव जानन्ति । तदात्मनो मुखेन किं कथयिष्यामः ।

३ अयि पतिव्रते, जानन्ति जानन्ति । तत एव कल्ये तव भुजवल्ल्या अङ्के संक्रान्तं दृष्टं मया मकरकुण्डललाञ्छनम् । तथैव विशाखया तत्र तूलिकोपरि स्खलितं शिखण्डकिरीटम् ।

४ परपरवादिनि, अपेहि अपेहि ।

५ राधे, कियदाच्छादयसि । न खलु चन्द्रालोके चन्द्रकान्तशिला अप्रस्विन्ना भवितुं प्रभवति ।

राधिका—(पुरो दृष्ट्वा सचमत्कारम् ।) ललिदे, तूणं अणुजाणेहि । पलाइस्सम् । (इत्युत्कम्पते ।)

ललिता—(साशङ्कम् ।) राधे, कीस भाएसि ।

राधिका—(साभ्यसूयम् ।) अइ वङ्के, अलं इमिणा उज्जुअत्तणेण । णूणं इमस्स लम्पडस्स हत्थे पक्खेदुं मं दूरे आणीदासि ।

ललिता—(निपुणं निभाल्य स्वगतम् ।) णूणं दूरदो विलोइज्जन्तं तमालं ज्जेव इअं कण्हं मण्णेदि । (प्रकाशम् ।) हुं, दाणिं कधं पलाइस्ससि । लद्धो मए ओसरो । (इति राधामाकर्षति ।)

राधिका—(सकातर्यम् ।) सैहि विसाहे, परित्ताहि परित्ताहि । सरणाअदम्हि ।

विशाखा—अइ पेम्मुब्भमिदे, कधं तिल्लोकं ज्जेव दे कण्हएदि । पेक्ख एसो पसाली, ण क्खु तुज्झ विलासी ।

कृष्णः—कथं नेदानीमपि प्रत्यासन्ना तन्वङ्गी । तन्मुरलीमीरयामि । (इति तथा कुर्वन् ।)

---

१ ललिते, तूर्णमनुज्ञापय । पलायिष्यामि ।

२ राधे, कस्माद्बिभेषि ।

३ अयि वक्रे, अलमनेन ऋजुकत्वेन । नूनमस्य लम्पटस्य हस्ते प्रक्षेप्तुं मां दूरे आनीतासि ।

४ नूनं दूरतो विलोक्यमानं तमालमेवेयं कृष्णं मन्यते । हुं, इदानीं कथं पलायिष्यसि । लब्धो मयावसरः ।

५ सखि विशाखे, परित्रायस्व परित्रायस्व । शरणागतास्मि ।

६ अयि प्रेमोद्भ्रान्ते, कथं त्रैलोक्यमेव ते कृष्णायते । पश्यैष पलाशी, न खलु तव विलासी ।

अयि सुधाकरमण्डलि मण्डय त्वमटवीं मृदुपादविसर्पणैः।
उदयशैलतटीनिहितेक्षणो ननु चकोरयुवा परितप्यते ॥ ९ ॥

विशाखा—(स्वयं धैर्यमवष्टभ्य।) हला राहे, कीस तुमं भमन्ती कलम्ब ओलम्बेसि।

ललिता—सहि वंसिए, वारंवारं तुमं वन्देमि। जं उग्घाडिदरहस्सा तुए राही किदा।

(राधिका सलज्जमवहित्थां नाटयति।)

ललिता—(संस्कृतेन।)

विशुद्धिः कर्णान्ते तव विस्मरैरद्य मुरली-
कलैरूरुस्तम्भो गुरुरजनि रम्भोरु तरसा।
विलुप्ताभूद्दृष्टिर्नयनजलवृष्टिव्यतिकरैः
प्रणीताभिर्यत्नाच्चदलमवहित्थालहरिभिः ॥ १० ॥

विशाखा—ललिदे, को दाणिं अवहित्थाए ओसरो। (इति संस्कृतेन।)

त्रपाभिचरणक्रमे परमसिद्धिराथर्वणी
स्मरानलसमिन्धने सपदि सामिधेनीध्वनिः।

---

१ सखि राधे, कस्मात्त्वं भ्रमन्ती कदम्बमवलम्बसे।

२ सखि वंशिके, वारंवारं त्वां वन्दयामि। यदुद्घाटितरहस्या त्वया राधा कृता।

३ ललिते, क इदानीमवहित्थाया अवसरः।

---

तन्नामानुचारणादित्यर्थः ॥ अयीति। कल्ये प्रातः ॥ अयीति। सुधाकरमण्डलि हे चन्द्रमण्डलि, अपदेशेन हे राधे। 'बिम्बोष्ठी मण्डलं त्रिषु' इत्यमरः। पादविसर्पणैः किरणप्रसारणैश्चरणसंचालनैश्च ॥ कदम्बमवलम्बसे ॥ त्रपाभिचरणेति। त्रपाभिचरणक्रमोऽथर्ववेदोक्तसिद्धः। अथर्ववेदस्याभिचारप्रायत्वात्।

तथात्मपरमात्मनोरुपनिषन्मयी संगमे
विलासमुरलीभवा विरुतिरद्य वैरायते ॥ ११ ॥

**राधिका**—(सक्षोभम्।) सहि, सच्चं कधेसि। अम्हाणं वइरिणी संवुत्ता दारुणो वंसिआ। ता उवालइस्सम्। (इति संस्कृतेन।)

सूतिस्ते धनुषश्च वंशवरतो वन्दे तयोरन्तिमं
विद्धो येन जनस्तनुं विहरयन्नान्तश्चिरं ताम्यति।
विद्धानां हृदि मारपत्रिविषमैर्ध्वानेषुभिर्नस्त्वया
क्रूरे वंशि न जीवनं न च मृतिर्घोराविरासीद्दशा ॥ १२ ॥

**कृष्णः**—(पुरो विलोक्य सानन्दम्।)

भविता सविधेऽत्र राधिका यदियं रिङ्गति रङ्गिणी पुरः।
मृगलाञ्छनलेखयेव या मृगमूर्तिर्न तया वियुज्यते ॥ १३ ॥

(पुनर्निरूप्य।) सखे, ज्ञातं ज्ञातम्। नासौ राधिकान्यङ्कः। यदयं निरङ्को नेदीयानिन्दुः। (इति विस्मयमभिनीय।)

---

१ सखि, सत्यं कथयसि। अस्माकं वैरिणी संवृत्ता दारुणा वंशिका। तदुपालप्स्यामि।

---

स्मरानलस्य समिन्धने ज्वालने सामिधेनीध्वनिः सामिधेनीमन्त्रपाठः। 'ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः। आत्मपरमात्मनोः संगमे एकीकरणे उपनिषन्मयी तत्त्वमसीति वाक्यमयी। तथा च लज्जाक्षयं कामोद्रेकं प्रेमम्...च करोतीत्यर्थः। वैरायते। वैरं करोतीत्यर्थः। 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इति णिङ्॥ **सूतिरिति**। वरवंशतः सकाशात्ते तव एवं धनुषश्च सूतिरुत्पत्तिस्तयोरन्तिमं धनुर्वन्दे, येन विद्धः सन् तनुं विहरयन् त्यजन् सन् चिरकालं नान्तस्ताम्यति। त्वया विद्धानां त्वस्माकं न जीवनं न च मृतिः। कैर्विद्धानाम्। ध्वानेषुभिः ध्वाना एव इषवस्तैः। कीदृशैः। मारपत्रिभ्यः कन्दर्पबाणेभ्योऽपि विषमैः॥ **भवितेति**। यदियं रङ्गिणी रिङ्गति, ततो राधिका सविधे निकटे भवितेत्यनुमानम्। तया राधिकया रङ्गिणी न वियुज्यते। मृगमू-

अङ्कात्परित्यज्य पुरः कुरङ्गं शङ्के सुधांशुर्भुवमाससाद ।

(पुनर्निभाल्य ।)

आं ज्ञातमुत्फुल्लविलासवृन्दैरानन्दि राधावदनं चकास्ति ॥१४॥

(इत्यग्रे सरति ।)

**मधुमङ्गलः**—(सपरिहासम् ।) भो वअस्स, मा धाव । लहु जाहि । अहवा तुमं किंति दूसिज्जसि, जं धुत्तकिसोरीहिं दुट्ठमन्तेण उम्मादिदोसि । ता इमस्सिं जोग्गे ओसरे तुमं णिवारिअ सिणेहस्स णिकिदं करिस्सम् । (इति पाणिमादधाति ।)

**कृष्णः**—सखे, साधु चेष्टसे यदद्य राधिकोपसर्पणे कम्पेन कृतविघ्नस्य मे दत्तहस्तावलम्बोऽसि । (इति परिक्रम्य ।)

इयमतितृषितं वरानुरागोज्ज्वलसुमनाः कमनीयपत्रलेखा ।
मम वरतनुराचकर्ष चित्तं मधुपमशोकलतेव पुष्पिताग्रा ॥ १५ ॥

**राधिका**—(कृष्णमपाङ्गेन विलोक्य । स्वगतम् । संस्कृतेन ।)

नवमनसिजलीलाभ्रान्तनेत्रान्तभाजः
स्फुटकिसलयभङ्गीसङ्गिकर्णाञ्चलस्य ।
मिलितमृदुलमौलेर्मालया मालतीनां
मदयति मम मेधां माधुरी माधवस्य ॥ १६ ॥

---

१ भो वयस्य, मा धाव । लघु याहि । अथवा त्वं किमिति दूषिष्यसि, यो धूर्तकिशोरीभिर्दुष्टमन्त्रेणोन्मादितोऽसि । तदस्मिन्योग्येऽवसरे त्वां निवार्य स्नेहस्य निकृतं करिष्यामि ।

---

र्तिर्मृगाकृतिर्मृगलाञ्छनलेखयेव ॥ सखे इति । न्यक्कुर्हरिणी ॥ इयमिति । वरानुरागेणोज्ज्वलं प्रेममयं शोभनं मनो यस्याः, पक्षे अनुगतरक्तिम्ना उज्ज्वलानि सुमनांसि यस्याः । कमनीयानां पत्राणां लेखा श्रेणी यस्यां च ॥ नवेति । मेधां

**विशाखा**—(विहस्य । संस्कृतेन ।)

वशीचक्रे कृष्णस्तव परिमलैरेव बलिभि-
र्विलासानां वृन्दं कथमिव मुधा कन्दलयसि ।
जये पाणौ दत्ते रणपटुभिरग्रेसरभटैः
स्वयं को विक्रान्तिं पुनरिह जिगीषुः प्रणयति ॥ १७ ॥

**राधिका**—[१]अइ दुम्मुहि, पत्तिअम्मि संकडे मं आरोविअ अज्जवि ण विस्सन्तासि । ता णिक्किवहिअअं तुमं उज्झिअ अहं सिणिद्धपिअसहीं ललिदं सरणं पविसामि । (इति तथा कृत्वा संस्कृतेन ।)

अत्रायान्तं चलमपि हरिं लोकयन्ती बलिष्ठां
त्वामालम्ब्य प्रियसखि घने नास्मि कुञ्जे निलीना ।

**ललिता**—(सनर्मस्मितम् । संस्कृतेन ।)

अस्मान्मुग्धे हृदयनिहितादद्य पीताम्बरात्ते
शक्तो नान्यः कुचपरिचये मत्पुरो मा व्यथिष्ठाः ॥ १८ ॥

**कृष्णः**—(सानन्दम् ।) कल्याणि, काले लब्धासि । (इति राधामनुसर्पति ।)

**ललिता**—(साटोपं परिक्रम्य कृष्णं वारयन्ती ।) [२]छेइल्ल, ण हु एसा तुम्ह परिहासजोग्गा अम्हाणं पिअसही । ता अवेहि ।

---

१ अयि दुर्मुखि, संप्राप्ते संकटे मामारोप्याद्यापि न विश्रान्तासि । तन्निष्कृपहृदयां त्वामौज्झ्य हं स्निग्धप्रियसखीं ललितां शरणं प्रविशामि ।

२ विदग्ध, न खल्वेषा तव परिहासयोग्या अस्माकं प्रियसखी । तदपेहि ।

---

धारणावर्तीं बुद्धिं मदयति । धारणावत्या बुद्धेर्मत्ततया स्थित्वा विस्मर्तुं शक्या न भविष्यति शोभेयमिति भावः ॥ **वशीचक्रे इति** । विलासानां बिब्बोकविभ्रमादीनां वृन्दं मुधा व्यर्थं कन्दलयसि प्रकाशयसि ॥ **अत्रायान्तमिति** । त्वां बलिष्ठामालम्ब्य आश्रित्य चलं चञ्चलं हरिं लोकयन्ती पश्यन्त्यपि सतीत्यर्थः ।

**कृष्णः**—(सस्मितम्।) ललिते, नेदं गोष्ठाङ्गनम्। पश्य वृन्दाटवीकुक्षिरसौ। तन्नेह वः प्रभविष्णुता।

**ललिता**—[1]कण्ह, अम्हाओ ताओ क्खु मुद्धिआओ जाओ तुम्हत्तो वि सुट्ठु भाएन्ति। एसम्हि पसिद्धा ललिदा।

(राधिका चलापाङ्गेन कृष्णं विलोक्य कम्पं नाटयति।)

**ललिता**—[2]राहे, कीस सज्झसेण कम्पसि जं एसा जीअदि ललिदा।

**राधिका**—[3]ललिदे, गहीदाइं बन्धूगपुप्फाइं। ता एहि। कालिन्दीतीरं गच्छम्ह।

**कृष्णः**—कठोरे, कथमाहृतबन्धुजीवा विदूरं गन्तुमुत्सुक्तासि। (इति पन्थानमावृण्वन्।)

परीतं श्लक्ष्णेण स्फुटतरशिलाश्यामलरुचं
चलद्वेत्रं वंशव्यतिकरलसन्मेखलममुम्।
अतिक्रम्योत्तुङ्गं धरणिधरमग्रे कथमित-
स्त्वया गन्तुं शक्या तरणिदुहितुस्तीरसरणिम्॥ १९॥

---

१ कृष्ण, अस्मासु ताः खलु मुग्धिकाः याः त्वत्तोऽपि सुष्ठु बिभ्यति। एषास्मि प्रसिद्धा ललिता।

२ राधे, कस्मात्साध्वसेन कम्पसे यदेषा जीवति ललिता।

३ ललिते, गृहीतानि बन्धूकपुष्पाणि। तदेहि। कालिन्दीतीरं गच्छामः।

---

हृदये निहितादुपरि प्रकटं भावनया चार्पितात्पीताम्बरात्पीतवस्त्रात् कृष्णाच॥ **कठोर इति**। आहृतबन्धुजीवा मदुद्यानस्थबन्धुजीवपुष्पं हृत्वा। चोरयित्वेत्यर्थः। पक्षे आहृतो बन्धोर्मम जीव आत्मा यया तथाभूता भूत्वेत्यर्थः॥ **परीतमिति**।

**राधिका**—(वक्रं विलोक्य हुंकुर्वती।) णाअर, मम दोसो णत्थि। दाणिं एसा गोउलेसरिं अणुसरिस्सम्।

**कृष्णः**—राधे, किं विभीषिकया। कामं गम्यताम्। तद्भुजमूलस्थं पीतदुकूलमेव ममानुकूलम्। (इति राधां दिधीर्षति।)

**राधिका**—(भ्रुकुटीमाबध्य। संस्कृतेन।)

साध्वीनां धुरि धार्या ललितासङ्गेन गर्विता चास्मि।
हितमालपामि माधव पथि माद्य भुजङ्गतां रचय॥ २०॥

**कृष्णः**—ललिते, किमश्रावि वाग्भङ्गिरस्याः। तदहं नापराध्यामि। (इति भुजदण्डावुद्दण्डयति।)

**ललिता**—(राधां पृष्ठतः कृत्वा।) कॅण्ह, सव्वलोअसलाहणिज्जगुणोवि तुमं गोउलिन्दस्स णन्दणोसि। ता णेदं दे दुल्लीलत्तणं अम्हेसु जोग्गम्।

---

१ नागर, मम दोषो नास्ति। इदानीमेषा गोकुलेश्वरीमनुसरिष्यामि।

२ कृष्ण, सर्वलोकश्लाघनीयगुणोऽपि त्वं गोकुलेन्द्रस्य नन्दनोऽसि। तन्नेदं ते दुर्लीलत्वमस्मासु योग्यम्।

---

श्लेषः पर्वतापेण, वाद्यभेदेन च। शिलाभिः शिलेव च श्यामला रुचिर्यस्य। चलन्ति कम्पयन्ति वेत्राणि चलच्चलं वेत्रं च यस्य तम्। वंशव्यतिकरैर्वंशवृक्षसमूहैर्लसन्ती मेखला यस्य, वंशव्यतिकरेण वंशीसंमीलनेन लसन्ती मेखला क्षुद्रघण्टिका यस्य च। धरणिधरं पर्वतं कृष्णं च॥ **राधे इति**। अनुकूलमिति। मम पीताम्बरमाच्छिद्यानया नीतम्। मम को दोष इति मयापि तस्याग्रतो निवेद्य पीताम्बरमिदमाकृष्य गृह्णामि। ततस्त्वं निरुत्तरीया यातुं न प्रभविष्यसीति भावः। यद्वा मदीयपीतवस्त्रयुक्ता लज्जयैव तत्र गमने न शक्तिरिति भावः॥ **साध्वीनामिति**। साध्वीनां पतिव्रतानां सुन्दरीणां च धुरि। चिन्तनेन गणनीयेत्यर्थः। धार्या गणनीया। ललितायाः सङ्गेन ललितः शोभनो य आसङ्ग आसक्तिस्तेन च गर्वितास्मि। अत एवाद्य पथि भुजङ्गतां कामुकतां मा रचय। पक्षे मा मां भुजंगतां दुर्गतां रचय कुरु॥ **ललिते इति**। वाग्भङ्गिः स्वयं वीक्षम्।

**मधुमङ्गलः**—[1]अइ गव्विदे, किंति वुन्दाअणं विद्धंसिअ तुम्हेहिं अम्हपिअवअस्सस्स पुप्फाइं हरिस्सन्ति ।

**कृष्णः**—सखे, तूर्णं गणयासां पुष्पाणि यथा तुल्संख्यया कण्ठतो हारमणीनाहरामि ।

**मधुमङ्गलः**—[2]पिअवअस्स, किअं गणणं । ता रत्ताणं पुप्फाणं परिवट्टेण पउमरागाइं गेण्ह । पण्डराणं उण हीरमौत्तिआइं ।

**कृष्णः**—सखे, पर्यालोचयम् । नामूनि पुष्पमूल्यतुल्यानि । ततः कतिभिरेव पर्याप्तिः ।

**मधुमङ्गलः**—(सकाकुप्रपञ्चम् ।) [3]वअस्स, एसो अणुग्गईदो बम्हणो अब्भत्थेदि । ता इमेहिं ज्जेव संतुट्ठो होहि ।

**कृष्णः**—यथा ब्रवीति वयस्यः ।

**ललिता**—(विहस्य ।) [4]अज्ज, सामिणो जोग्गो ज्जेव अमाच्चोसि ।

**विशाखा**—(अलीकसंभ्रमम् ।) [5]कण्ह, दूरे चिट्ठेहि ।

**कृष्णः**—कुटिले, किमिति ।

**विशाखा**—पेक्ख[6] । संरम्भेण संगरंगमिदा चन्दहासं उल्लासेदि अम्हपिअसही राहा ।

---

१ अयि गर्विते, किमिति वृन्दावनं विध्वंस्य युष्माभिरस्मत्प्रियवयस्यस्य पुष्पाणि हरिष्यन्ते ।

२ प्रियवयस्य, कृतं गणनम् । तद्रक्तानां पुष्पाणां परिवर्तेन पद्मरागाणि गृहाण । पाण्डुराणां पुनर्हीरमौक्तिकानि ।

३ वयस्य, एषोऽनुगृहीतो ब्राह्मणोऽभ्यर्थयति । तदेतैरेव संतुष्टो भव ।

४ आर्य, स्वामिनो योग्य एवामात्योऽसि ।

५ कृष्ण, दूरे तिष्ठ ।

६ पश्य । संरम्भेण संगरं गमिता चन्द्रहासमुल्लासयत्यस्मत्प्रियसखी राधा ।

---

पेक्खेति ।—संरम्भेण कोपावेशेन रसावेशेन च । हेतौ कर्तरि करणे च तृतीया ।

**कृष्णः**—(स्मित्वा ।) मुग्धे, पश्य । अहं च प्रपञ्चितगाढरोमाञ्च-कञ्चुकोऽस्मि । तदयत्नं रामारत्नं हरिष्यामि । (इति राधामनुसर्पति ।)

**ललिता**—(संरम्भमभिनीय ।) [1]कण्ह, पेक्खामि दे साहसं । राहिआछाअं पि तुमं फंसेहि ।

**कृष्णः**—सखे, नूनं ललितारूपेण महाभैरवीयं प्रादुर्भूता ।

**राधिका**—[2]हला, कल्लाणी होहि । (इति ललितां साकूतमालिङ्गति ।)

**कृष्णः**—(जनान्तिकम् ।) ललिते, विमुञ्च काठिन्यम् ।

**ललिता**—[3]उक्कोअं मे देहि ।

**कृष्णः**—(स्मित्वा ।) ललिते, सत्यं ते ब्रवीमि राधामपि विप्रलभ्य सायमनङ्गसंगरे त्वामेव प्रतिरीरयिष्ये ।

**ललिता**—(सरोषं परावृत्य ।) [4]अवेहि विदूसक, अवेहि ।

**कृष्णः**—कथयोत्कोचं यत्र ते तुष्टिः ।

**ललिता**—[5]णाअर, पुप्फमग्गणरङ्गेण बुन्दावणं भम्मन्ती दूमेदि मे सही । ता दिव्वपुप्फेहिं णं अलंकदुअ सुहावेहि ।

---

१ कृष्ण, पश्यामि ते साहसम् । राधायाश्छायामपि त्वं स्पृश ।

२ हला, कल्याणी भव ।

३ उत्कोचं मे देहि ।

४ अपेहि विदूषक, अपेहि ।

५ नागर, पुष्पमार्गणरङ्गेण वृन्दावनं भ्रमन्ती दूयते मे सखी । तद्दिव्यपुष्पैरेनामलंकृत्य सुखय ।

---

संगरं युद्धं गमिता प्रापिता । सङ्गरङ्गं सङ्गे निमित्ते रङ्गमौत्सुक्यम् इता प्राप्तेति च । चन्द्रहासं खड्गं चन्द्रतुल्यं हासं च । उल्लासयति उत्कामयति प्रकाशयति च ॥ **मुग्धे इति ।** कञ्चुकं कवचम् । रामाया रत्नं रामारूपरत्नं च ॥ **सखे इति ।** भैरवीति । अस्याः पतिमन्यो भैरव इति परिहासः ॥ **ललिते इति ।** प्रतिरीरयिष्ये प्रतियोद्धीकरिष्ये ॥ **णाअर इति ।** पुष्पमार्गणरङ्गेण अन्वेषणाभिलाषेण,

**कृष्णः**—(स्मित्वा ।) यथाभिरोचते तुभ्यम् । (इति परिक्रम्य । दर्याेरभटीं नाटयन् ।) ललिते, बाढं विक्रुश्यताम् । न त्वां तृणायमन्ये (इति राधिकाहारमाक्रष्टुं करं प्रसारयति ।)

**ललिता**—(वामं विलोक्य । सस्मितम् ।) [1]छइल्ल, सूरदेअपूआकिदे किदसिणाणं पिअसहीं अकिदसिणाणो क्खु तुमं मा फंसेहि ।

**कृष्णः**—अयि मदान्धे, समन्तादुल्लासिनि प्रस्वेदाम्बुपूरे मयि कथं कृतमहाभिषेकं न पश्यसि ।

**ललिता**—(राधामन्तरयन्ती समान्थर्यम् ।) [2]हला, उद्दण्डकालतमालघोलेण वणखण्डेण इमस्स पअण्डदा दूसहा किदा । ता अम्हेहारं रक्खिदुं क्खणं सोम्मा होम्ह ।

**मधुमङ्गलः**—[3]हीही, णिज्जिदाओ गव्विदगोविआओ । (इति नृत्यति ।)

**राधिका**—[4]अइ मुद्धे ललिदे, भअवन्तस्स उवासणं तुए अज्ज किं विसुमरिदम् ।

**मधुमङ्गलः**—[5]देइ राहिए, केअलं तुम्हे ज्जेबं उवासणं कुरुध त्ति मा गवाएव, जं अम्हेपि उवासणं करेम्ह ।

---

१ विदग्ध, सूर्यदेवपूजाकृते कृतस्नानां प्रियसखीमकृतस्नानः खलु त्वं मा स्पृश ।

२ हला, उद्दण्डकालतमालघोरेण वनखण्डेनास्य प्रचण्डता दुःसहा कृता । तदस्मद्धारं रक्षितुं क्षणं सौम्या भवामः ।

३ हीही, निर्जिता गर्वितगोपिकाः ।

४ अयि मुग्धे ललिते, भगवत उपासनं त्वयाद्य किं विस्मृतम् ।

५ देवि राधिके, केवलं यूयमेवमुपासनं कुरुतेति मा गर्वायध्वम्, यद्वयमप्युपासनं कुर्मः ।

**विशाखा**—[1]अज्ज, कीदिसं तम् ।

**मधुमङ्गलः**—[2]भोदि विसाहे, सुणाहि । गन्धपुप्फपुरस्सरं णिउञ्जवेदिआमज्झे उज्जाअरणभूइट्ठं तदेक्कग्गचित्तदाए कङ्कणाणं सद्दोवासणम् ।

(सर्वाः स्मयन्ते ।)

**मधुमङ्गलः**—(सश्लाघम् । संस्कृतेन ।)

आडम्बरोज्ज्वलगतिर्वरकुञ्जबद्धः
स्वैरी परिस्फुरितपुष्करचारुहस्तः ।
धन्यासि सुन्दरि यया मृदुलं हसन्त्या
बन्दीकृतस्तरलबल्लवकुञ्जरोऽयम् ॥ २१ ॥

**कृष्णः**—प्रिये,

रुचिरसहचरीणां वीथिभिः सेव्यमाना
मदमृदुलमरालीरम्यलीलागतिश्रीः ।
शशिमुखि गतनिद्रं कुर्वती मामिदानीं
शरदिव भवतीयं लोकलक्ष्मीं तनोति ॥ २२ ॥

तदर्वाचीनेन हारिलावण्यशृङ्गारेण भवतीमलंकुर्वाणः शारदीं श्रियमवन्ध्ययामि ।

---

१ आर्य, कीदृशं तत् ।

२ भवति विशाखे, शृणु । गन्धपुष्पपुरःसरं निकुञ्जवेदिकामध्य उज्जागरणभूयिष्ठं तदेकाग्रचित्ततया कङ्कणानां शब्दोपासनम् ।

---

पुष्पमार्गणः कन्दर्पस्तस्य रङ्गेण च ॥ बाढं विकुरयतामिति राधिकां श्रावयति ॥ **आडम्बरेति** । आडम्बरेणाटोपेन, गर्जनेन चोज्ज्वला गतिर्यस्य । परिस्फुरितं पुष्करं शुण्डमेव चारुर्हस्तो यस्य, परिस्फुरितेन पुष्करेण लीलाकमलेन चारुः शोभितो हस्तो यस्येति च । बन्दीकृतः स्तावकः कृतः बद्धः कृतश्च । 'प्रग्रहोपग्रहौ बन्द्याम्' इत्यमरः ॥ **रुचिरेति** । सहचरीणां झिण्टीपुष्पाणां सखीनां च । मद-

**मधुमङ्गलः**—(संस्कृतेन ।)

बलानुज कलापिनामवकलय्य कालज्ञतां
मनः किल बलीयसीं मम बिभर्ति विस्मेरताम् ।
यदद्य शरदागमे तव विलोक्य लीलोत्कृतां
किरन्ति रुचिमण्डलीजुषममी शिखण्डावलीम् ॥ २३ ॥

**कृष्णः**—सखे, साधु लक्षितं तन्मौलिकल्पनाय चन्द्रकानाहरामि । (इति बटुना सह तथा करोति ।)

**राधिका**—सहि ललिदे, जत्थ दिण्णभारा अहं णिच्चिदम्हि, सा तुमं जइ सोम्मासि, तदो जाव कण्हो दूरे गदो, ताव कङ्केल्लिकुडङ्गं पवेसिस्सम् । (इति तथा स्थिता ।)

**कृष्णः**—सखे, निर्मितं प्रचलाकशलाकाभिः किरीटं खञ्जरीटनेत्रायाः सीमन्तसीमनि विन्याससौभाग्यमालम्बताम् । (इति परिक्रम्य ।) ललिते, क्व सा ते प्रियसखी ।

**ललिता**—अत्तणो घरं गदा ।

**कृष्णः**—निष्ठुरे, तिष्ठ । तूर्णमसौ ते धूर्ततागर्वमपहरामि । (इति समन्तात्पश्यन् । सहर्षम् ।) वयस्य, पश्य । सहसेयमवाप्ता गौराङ्गी प्रिया । (इत्युपसर्पति ।)

---

१ सखि ललिते, यत्र दत्तभाराहं निश्चिन्तास्मि, सा त्वं यदि सौम्यासि, तदा यावत्कृष्णो दूरे गतः, तावत्कङ्केल्लिकुञ्जे प्रवेक्ष्यामि ।

२ आत्मनो गृहं गता ।

---

मृदुलमराल्या गतिरिव रम्या लीलागतिश्रीर्यस्याः । तासां रम्भाभिर्नानागतिभिः श्रीः शोभा यस्याम् । लोकलक्ष्मीं लोचनसंपत्तिं लोकानां शोभां च ॥ **बलानुज इति ।** कलापिनां मयूराणां कालज्ञतां यस्मिन्काले यदुचितं तत्र विज्ञताम् । विस्मेरतां विस्मयम् । किरन्ति क्षिपन्ति ॥ **सखे इति ।** मौलिकल्पनाय मुकुटनिर्माणाय ॥

**मधुमङ्गलः**—(विहस्य ।) [1]भो वअस्स, चक्कवादेण तिणावट्टेण भमिदस्स दे अज्जवि णूणं भमो ण गदो । पेक्ख एसा पीदपराअपुञ्जपिञ्जरिदा थलणलिणी ।

**कृष्णः**—(निरूप्य ।) सखे, सत्यं ब्रवीषि । (इत्यन्यतो गत्वा ।) भो सखे, पश्य कुङ्कुमाङ्गी निष्टङ्कितमिदानीमेव लब्धा । (इति दिधीर्षुः प्रधावति ।)

**मधुमङ्गलः**—(सहस्ततालमुच्चैर्विहस्य ।) [2]भो वअस्स, एत्थ तुज्झ अवराहो णत्थि । किंतु पेम्मलहरीए ज्जेब । जाए सवा वुन्दाटइ राहिआ णिम्मिदा ।

**वृन्दा**—(सवैलक्ष्यं । विलोक्य ।) कथमुत्फुल्लेयं सहचरी । (पार्श्वतो विलोक्य ।) ललिताङ्गि ललिते, इतो वाम्यपर्वतादवरोहन्ती कान्तारमितस्य ददस्व मे हस्तावलम्बम् ।

**ललिता**—(स्मित्वा ।) सुन्दर, वि[3]साहं पुच्छेहि । एसा क्खु णं जाणादि । (इति संज्ञां नाटयति ।)

**कृष्णः**—(सहर्षमपवार्य ।) सखे, पश्य विशाखायाः परोक्षं किंचित्तिरोऽवलम्बन्ती ललिता भ्रूसंज्ञया कदम्बकुञ्जं सूचयति । तदत्र नास्ति मनागपि संदिग्धता । (इति परिक्रम्य सदर्पस्मितम् ।) प्रिये, विलोकितासि ।

---

१ भो वयस्य, चक्रवातेन तृणावर्तेन भ्रमितस्य तेऽद्यापि नूनं भ्रमो न गतः । पश्यैषा पीतपरागपुञ्जपिञ्जरिता स्थलनलिनी ।

२ भो वयस्य, अत्र तवापराधो नास्ति, किंतु प्रेमलहर्या एव, यया सर्वा वृन्दाटवी राधिका निर्मिता ।

३ सुन्दर, विशाखां पृच्छ । एषा खल्वेनां जानाति ।

---

**सहीति** । कङ्केलिकुञ्जमशोककुञ्जम् ॥ **कथमिति** । सहचरी पीतझिण्टी । कान्तारं

निर्गम्यताम् । (इत्युद्ग्रीविकां कृत्वा सहासम् ।) ललिते, साधु साधु । जातं तव धूर्तताल‌तिकायाः साफल्यमिदम् ।

मधुमङ्गलः—वैअस्स, एसा मए ज्जेव्व लद्धा तुह राधा ।

कृष्णः—(सकौतुकम् ।) वयस्य, ललितेव कच्चिदविस्रम्भणीयभणितिर्नासि ।

मधुमङ्गलः—गैाअत्तीए सवामि ।

कृष्णः—(सविस्रम्भम् ।) सखे, क सा दर्शय शीघ्रम् ।

मधुमङ्गलः—तुं॑म्ह हत्थगदं जेव्व णं करेमि । ता देहि मे पारितोसिअम् ।

(कृष्णः सश्लाघं मालतीमालया मण्डयति ।)

मधुमङ्गलः—⁴घेप्पिज्जउ एसा । (इति 'राधा' इति वर्णद्वयीभाजं पत्रलेखामर्पयति ।)

कृष्णः—(स्मित्वा ।) सखे, सत्यमनेनापि भवदर्पितेन तर्पितोऽस्मि । यतः ।

क्रमात्कक्षामक्ष्णोः परिसरभुवं वा श्रवणयो-
र्मनागध्यारूढं प्रणयिजननामाक्षरपदम् ।
कमप्यन्तस्तोषं वितरदवलम्बादनुपदं
निसर्गाद्विश्वेषां हृदयपदवीमुत्सुकयति ॥ २४ ॥

(इति परावृत्य दक्षिणतो विकसन्तमशोकमवलोक्य सविस्मयम् ।)

---

१ वयस्य, एषा मयैव लब्धा तव राधा ।

२ गायत्र्यै शपामि ।

३ तव हस्तगतामेवैनां करोमि । तद्देहि मे पारितोषिकम् ।

४ गृह्यतामेषा ।

---

इतस्य गतस्य । कान्तया रतिमितस्य च ॥ क्रमादिति । मम पुनः किं वक्तव्यम् ।

शङ्के संकुलितान्तराय निविडक्रीडानुबन्धेच्छया
कुञ्जे वञ्जुलशाखिनः शशिमुखी लीना वरीवर्ति सा ।
नो चेदेष तदङ्गसंगमविनाभावादकाले कथं
पुष्पामोदनिमन्त्रितालिपटलीस्तोत्रस्य पात्रीभवेत् ॥ २५ ॥

(इति परिक्रम्य शुद्धीविकया राधां दृष्ट्वा सानन्दम् ।) प्रिये, कथ्यतामिदानीं का वा वार्ता ।

**राधिका**—(सप्रणयेर्ष्यम् ।) तुअत्तो भएण जेव्व पलाएदम्हि । एत्थ वि मं विडम्बेदुं लद्धोसि ।

**कृष्णः**—(सात्मश्लाघम् ।) दृष्टा मे पाटवारभटी । यतस्तिरोधानविद्यापहारेण निर्जिता यूयम् ।

**ललिता**—(संस्कृतेन ।) हन्त भो वाङ्मात्रजितकाशिन्,

अस्मिन्नेकसरोजसंभवकृतस्तोत्रोऽसि वृन्दावने
राधा भूरिहिरण्यगर्भरचितप्रत्यङ्गकान्तिस्त्वचा ।
हस्तोदस्तमहीधरस्त्वमसकृन्नेत्रान्तभङ्गिच्छटा-
कृष्टोच्चैर्धरणीधरा मम सखी तद्वीरमाहं कृथाः ॥ २६ ॥

---

१ त्वत्तो भयेनैव पलायितास्मि । अत्रापि मां विडम्बयितुं लब्धोऽसि ।

---

विश्वेषां जनानां प्रणयिजननामाक्षरपदं कर्तरि क्रमाद्दृश्यमानं चेत्यर्थः । अन्तस्तोषं ददत् सत् ॥ **शङ्के इति** । एष वञ्जुलशाखी । 'बकुलो वञ्जुलोऽशोके' इत्यमरः । पुष्पैः प्रेषितेनामोदेन माध्वीकपानाय मद्गृहमलंकुरुतेति निमन्त्रितानामलिपटलीनां भ्रमरसमूहानां त्वादृशः परमोदारो भुवि को वर्तते इति स्तोत्ररूपगुञ्जितस्य पात्रमन्यथा न भवेत् । पात्रीभवेदिति अभूततद्भावे च्विः ॥ **हन्तेति** । जितकाशिन् जितमित्यात्मश्लाघिन् । **अस्मिन्निति** । अस्मिन् वृन्दावने एकेन सरोजसंभवेन ब्रह्मणा कृतस्तोत्रोऽसीति तवाहंकारः । राधा भूरिहिरण्यगर्भैर्बहुभिर्ब्रह्मभिर्भूरिहिरण्यानां बहुतरसुवर्णानां गर्भैश्छिन्ने सति चाकचिक्यायमानमध्यगतसारांशैश्च रचितः प्रत्यङ्गकान्तीनां त्वचो यस्याः । हस्तोत्कृष्टमहीधरस्त्वमिति तवाहंकारः ।

कृष्णः—ललिले, निलीने मयि विलोकिते नातथ्यं तव विकत्थनं भवतीनां विदांकरवाणि।

सर्वाः—एंवं होदु।

कृष्णः—इयमुत्तरतश्चञ्चरीकसंचयरोचिरुल्लासिश्यामलपलाशगुलुच्छा दूरतस्तापिच्छविच्छोली। तदेषा सवर्णतया सखीभावमापन्ना मामत्र संगोपयिष्यति। (इति सवयस्यो निष्क्रान्तः।)

ललिता—हंला राहे, कण्हस्स अदंसणेण मा उत्तम्म। णं दिट्ठं जेव्व जाणेहि। ता विजुत्ता आसवदो उपसप्पम्ह।

राधिका—जंधा भणदि पिअसही।

(इति तिस्रस्तथा कुर्वन्ति।)

राधिका—(उत्तरां वनलेखामासाद्य सविमर्शम्।) णूंणं कण्हो एत्थ पत्तो हुविस्सदि जं मं पेक्खन्तो दक्खिणं पइट्ठो।

स हरिति भवतीभिः स्वान्तहारी हरिण्यो
हरिरिह किमपाङ्गातिथ्यसङ्गी व्यधायि।
यदनुरणितवंशीकाकलीभिर्मुखेभ्यः
सुखतृणकवला वः सामिलीढाः स्खलन्ति॥ २७॥

(पुरोऽभ्युपेत्य समन्तात्पश्यन्ती। संस्कृतेन।)

---

१ एवं भवतु।

२ हला राधे, कृष्णस्यादर्शनेन मोत्ताम्य। एनं दृष्टमेव जानीहि। तद्वियुक्ता आ सर्वत उपसर्पामः।

३ यथा भणति प्रियसखी।

४ नूनं कृष्णोऽत्र प्राप्तो भविष्यति, यन्मां पश्यन्दक्षिणं प्रविष्टः।

---

इयं तु नेत्रान्तभङ्गिच्छटयैवाकृष्ट उच्चैर्धरणीधरः कृष्णो यया। असकृदनेकवारम्। भवांस्त्वेकवारमिति भावः॥ **इयमिति**। चञ्चरीको भ्रमरः। तापिच्छविच्छोली तमालसमूहः॥ **स हरितीति**। हे हरिण्यः, स हरिः इह अस्यां हरिति दिशि

यदगलितमरन्दं वर्तते शाखिवृन्दं
मिलति च यदलब्धप्रेमघूर्णा खगाली ।
तदिह न हि शिखण्डोत्तंसिनी सा प्रविष्टा
निखिलभुवनचेतोहारिणी कापि विद्या ॥ २८ ॥

(इति सव्यतः परिक्रम्य । संस्कृतेन ।)

विघूर्णन्तः पौष्पं न मधु लिहतेऽमी मधुलिहः
शुकोऽयं नादत्ते कलितजडिमा दाडिमफलम् ।
विवर्णा पर्णाग्रं चरति हरिणीयं न हरितं
पथानेन स्वामी तदिभवरगामी हरिरगात् ॥ २९ ॥

(पुरो गत्वा ।) एसा वामदो काली तमालअली दीसइ । (इति साचिकंधरं निभाल्य । संस्कृतेन ।)

नैसर्गिकाण्यपि निरर्गलचापलानि
हित्वाद्य संकुलतनुः पुलकाङ्कुरेण ।
दृष्टिं चिरेण परिरब्धतमालशाखा
शाखामृगीततिरियं किमधस्तनोति ॥ ३० ॥

ता एसा मञ्जुला ताविञ्छणिउञ्जसालिआ पेक्खिदव्वा ।

(प्रविश्य ।)

**कृष्णः**—(स्वगतम् ।) सत्यमस्याश्चित्तचत्वरसंगत्वरी प्रेमावलिरेव

१ एषा वामतः काली तमालावली दृश्यते ।
२ तदेषा मञ्जुला तापिच्छनिकुञ्जशालिका प्रेक्षितव्या ।

कं अपाङ्गातिथ्यसङ्गी व्यधायि । काकलीभिर्हेतुभिः सुखतृणकवलास्तृणग्रासाः ग्रामिलीढा अर्धगिलिता एव स्खलन्ति ॥ **विघूर्णन्त इति** । पौष्पं मधु न लिहते नास्वादयन्ति । घूर्णाजाड्यवैवर्ण्यानि क्रमेणोक्तानि । इभवरगामी श्रीकृष्णः । **एसेति** । काली कृष्णवर्णा । **नैसर्गिकाणीति** । शाखामृगीततिः परिरब्धतमा-

मदुद्देशदूती । यदलम्बितं विज्ञातभूयिष्ठोऽसि संवृत्तः । ततः स्थाणुरिव निश्चलस्तिष्ठामि । (इति तथा स्थितः ।)

**राधिका**—(मूर्धानमानमय्य कृष्णं पश्यन्ती । सव्याजम् ।) [1]एत्थ कण्हो णत्थि ।

**कृष्णः**—(स्वगतम् ।) दिष्ट्या न दृष्टोऽसि ।

**राधिका**—(सस्मितम् ।) [2]ऐसो णीलो मणिकीलो ज्जेव रेहदि ।

**कृष्णः**—नूनं घनान्धकारतो नाहं प्रत्यभिज्ञातः ।

**राधिका**—[3]अम्महे, उज्जलदा इन्दणीलकीलस्स ।

**कृष्णः**—(सहर्षमपवार्य ।)

रे ध्वान्तमण्डल सखे शरणागतोऽसि
विस्तारयस्व तरसा निजवैभवानि ।
अभ्याशमभ्युपगतापि मुहुर्यथा सा
नावैति मां नवकुरङ्गतरङ्गिनेत्रा ॥ २१ ॥

**राधिका**—(स्मित्वा ।) [4]अच्चरिअं अच्चरिअम् । इमस्स णीलोवलस्स अन्तराले पडिबिम्बिदा चन्दाअली लक्खीअदि ।

**कृष्णः**—(स्मितं कृत्वा स्वगतम् ।) कथं संविदाना खलु नर्मातनोति ।

---

१ अत्र कृष्णो नास्ति ।

२ एष नीलो मणिकील एव तिष्ठति ।

३ अम्महे, उज्ज्वलतेन्द्रनीलकीलस्य ।

४ आश्चर्यमाश्चर्यम् । एतस्य नीलोपलस्यान्तराले प्रतिबिम्बिता चन्द्रावली लक्ष्यते ।

---

लक्षाखा सती अधो दृष्टिं किं कस्माद्धेतोस्तनोति ॥ **सत्यमिति** । चित्तचत्वरसंगमशील । विज्ञातं भूयिष्ठं बहुतरचातुर्यं यस्य सः ॥ **रे ध्वान्तेति** । अभ्याशं निकटम् । नावैति न जानाति ॥ **कथमिति** । संविदाना जानन्ती । 'समो

(इत्युत्थाय । प्रकाशम् ।) प्रिये, सत्यमात्थ । यदयं त्वदास्यचन्द्रो मे हृद्वीचितरङ्गेषु बिम्बितश्चन्द्रावली बभूव ।

**राधिका**—[1]अम्हहे । कथं तुमं जेव्व । तदो णेदं अच्चरिअम् ।

**कृष्णः**—विलासिनि, किमनेन विश्लेषसंपाद्येन केलिनर्मणा । तदेहि । दानगन्धिना कुसुमवृन्देन पूर्णमूर्धनि सप्तपर्णकुञ्जे क्षणं विश्रामसौख्यमनुभवाम ।

(इति तथा स्थितौ ।)

**ललिता**—[2]विसाहे, पेक्ख । कण्हेण संगदा पिअसही, जं तस्स पदेहिं संमिस्सिदाइं एदाए पदाइं दीसन्ति ।

**विशाखा**—(पदाङ्काननुसृत्य संस्कृतेन ।)

प्रियसखि परिरम्भानाभिमुख्यानुबन्धा-
दसदृशविनिवेशान्नर्मलौल्योर्जितानि ।
इयमविषममन्दन्यासतो जल्पगोष्ठीं
पदततिरिह राधाकृष्णयोरातनोति ॥ ३२ ॥

**कृष्णः**—प्रिये, नातिदूरे कोमलोऽयं काञ्चीध्वनिरुदञ्चति । ततस्तूष्णीं शृणुवः ।

---

१ अहो । कथं त्वमेव । ततो नेदमाश्चर्यम् ।

२ विशाखे, पश्य । कृष्णेन संगता प्रियसखी, यत्तस्य पदैः संमिश्रितान्येतस्याः पदानि दृश्यन्ते ।

---

गम्यृच्छि-’इत्यादिनात्मनेपदम् । अतो नेदमाश्चर्यमिति । चन्द्रावली त्वयि प्रतिबिम्बिता तिष्ठत्येवेत्यर्थः ॥ **विलासिनीति** । विश्लेषः संपाद्य उत्पाद्यो यस्य । तेन कुलालकर्तृको घट इतिवत्संपाद्यपदस्य विशेष्यत्वम् ॥·········तत्रायं क्रमो

**विशाखा**—हला, वित्थिण्णवल्लिमण्डलकुण्डलिदे वि वणखण्डे पिअसहीए कधं कण्हो तुरिदं लद्धो।

**ललिता**—

गेरुअं रमई जहिं जो ण तस्स सो होइ दुल्लहो भुवणे।
मउलंलम्मिरसाले कलकण्ठी तक्खणं मिलई॥ ३३॥

**कृष्णः**—प्रिये, प्रत्यासन्ने तव सख्यौ। तदुभे परिहसिष्यन्नन्तरितो भवामि। (इति तथा स्थितः।)

**ललिता**—(परिक्रम्य पुरो राधामालोक्य च सहर्षम्।) हला, कुदो सो णाअरो।

**राधिका**—(सस्मितम्।) का क्खु तं जाणादि।

**ललिता**—(सनर्मस्मितं संस्कृतमाश्रित्य।)

कचा मुक्ता मुक्तावलिरपि ययौ निर्गुणदशां
विशुद्धं ते दन्तच्छदयुगमभूद्भ्रान्तहृदये।
अबन्धासीत्काञ्ची तदिव सखि युक्तासि हरिणा
सतीनां वः कृत्यं किमुचितमिदं गोकुलभुवाम्॥ ३४॥

---

१ सखि, विस्तीर्णवल्लिमण्डलकुण्डलितेऽपि वनखण्डे प्रियसख्या कथं कृष्णस्त्वरितं लब्धः।

२ गुरु रमते यत्र य स(न) तस्य न(स) भवति दुर्लभो भुवने।
मुकुलायमानरसाले कलकण्ठी तत्क्षणं मिलति॥

३ सखि, कुतः स नागरः।

४ का खलु तं जानाति।

---

विहारस्य। प्रथममसदृशनिवेशः, ततो मुखामुखिनिवेशः, ततः समानमुखनिवेशः। दर्शनक्रमस्तु विपर्ययेण॥ कचा इति। मुक्ताः प्राप्ताः, पवर्गाः स्खलिताश्च।

कृष्णः—(पुरोऽनुसृत्य ।) ललिते, नाहमपराध्यामि सख्यै । वने संगोपितोऽस्मि ।

ललिता—[1]किंति पिअसहीए संगोवणिज्जो तुमम् ।

कृष्णः—सुन्दरि, निजकन्दर्पकलाप्रागल्भ्यस्यापलापाय । (इत्यङ्गुल्या दर्शयन् ।) पश्य पश्य ।

कठोराग्रैर्भूयो व्रणमजनयद्वक्षसि नखै-
र्बलादाक्रामन्ती व्यकिरदपि मां पिच्छरचनाम् ।
विकृष्य च्छिन्नाङ्गीमकृतवनमालां च रुचिरा-
मिदानीं जानीते न किमपि पुरस्ते प्रियसखी ॥ ३५ ॥

राधा—(सापत्रपम् ।) [2]हुं, अप्पणा कदुअ परं दूसेदुं पण्डिदोसि ।

(नेपथ्ये ।)

जटिला—फुडमञ्जरीहिं[3]—(इत्यर्धोक्ते ।)

राधिका—(सत्रासम् ।) [4]अच्चाहिदं अच्चाहिदम् । भअंकरी वुड्ढिआ । ता तुरिअं पलाएम्ह । (इति सखीभ्यां सह निष्कान्ता ।)

---

१ किमिति प्रियसख्या संगोपनीयस्त्वम् ।
२ हुं, आत्मना कृत्वा परं दूषयितुं पण्डितोऽसि ।
३ स्फुटमञ्जरीभिः ।
४ अत्याहितमत्याहितम् । भयंकरी वृद्धा । तत्त्वरितं पलायामः ।

---

निर्गुणदशां छिन्नसूत्रताम् । सत्त्वादिगुणत्रयातीततां च । दन्तच्छदयुगमोष्ठाधरौ । विशुद्धं ताम्बूलरागरहितम् । पक्षे मुक्तमित्यर्थः । हे दान्तहृदये दान्तं गाढालिङ्गनेन प्राप्तसंमर्दम्, पक्षे दमयुक्तम् । जीवन्मुक्तमित्यर्थः । तथाभूतं हृदयं यस्याः । अबन्धा संसारबन्धरहिता, बन्धनग्रन्थिस्खलिता च । तत्तस्मादनुमीयते हरिणा त्वं युक्तासि । हरेर्योगेनैव कशे(काञ्ची)स्खलनहारत्रोटनादीनि निर्वाणो मोक्षश्च

(पुनर्नेपथ्ये ।)

विहूंदिमन्तो पराअपुञ्जेण हरभत्ता विअ सवए प्फुरन्ति सत्तच्छदप्पअराः ।

**कृष्णः**—(सवैलक्ष्यम् ।) हन्त, सप्तपर्णं वर्णयता जटिलेति कटूद्गारेण बटुना कदर्थितोऽसि । तदग्रे सुहृन्मण्डलमेव प्रयामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति शरद्विहारो नाम षष्ठोऽङ्कः ।

---

## सप्तमोऽङ्कः ।

(ततः प्रविशति वृन्दा ।)

**वृन्दा**—(समन्तादवलोक्य ।)

कदम्बाली जृम्भाभरपरिमलोद्गारिपवना
स्फुटद्यूथी यूथीकृतमधुपमानप्रणयिनी ।
नटत्केकिस्तोमा मृदुलयवसस्या मलिनभू-
स्तपान्तेऽद्य स्वान्तं मम रमयति द्वादशवनी ॥ १ ॥

---

१ विभूतिमन्तः परागपुञ्जेन हरभक्ता इव शरदि स्फुरन्ति सप्तच्छदप्रवराः ।

---

भवतीत्यर्थः । इदं किं गोकुलभुवां गोकुलवासिनीनां पतिव्रतानामुचितम् । नैवोचितमित्यर्थः । वस्तुतस्तु इदं किमुचितम् । इतोऽप्यधिकं कृष्णस्य मुकुटहारत्रोटनवक्षःसंमर्दनादिकं रतिवैपरीत्येनोचितमित्यर्थः । पक्षे गोकुलभुवां गोकुलभूमीनां सतीनां सर्वतीर्थेभ्योऽपि श्रेष्ठानामिदं कृत्यं मोक्षैकदात्रीत्वं किमुचितम् । नोचितमेव । प्रेमभक्तिक्षेत्रत्वात् ॥

षण्णामृतूनां मध्ये त्रयाणां वसन्तशरद्वर्षाणामेवाधिकं कामोद्दीपकत्वात्तत्रापि पूर्वपूर्वोत्कृष्टत्वात् प्रथमं वसन्तस्य ततः शरदः संक्षेपेण लीलोद्देशः कृतः । इदानीं श्रावणपूर्णिमादिनलीलामाविष्कुर्वन्वर्षां वर्णयति—**कदम्बालीति** । जृम्भा प्रफु-

(नेपथ्ये दृष्टिं निक्षिप्य ।) कथमसौ पौर्णमासी निजपर्णकुटीरोपान्तवाटिकायामभिमन्युना संकथयन्ती वर्तते । तदहं क्षणमत्रैव तिष्ठेयम् ।

(प्रविश्य तथाभूता पौर्णमासी ।)

पौर्णमासी—वत्साभिमन्यो, किमर्थं प्रातरेवाहमुपसादितास्मि ।

अभिमन्युः—[1]तुज्झ आणं गहीदुम् ।

पौर्णमासी—कस्मिन्नर्थे ।

अभिमन्युः—[2]वारिसहाणवीए महुरापत्थाणे ।

पौर्णमासी—(सव्यथम् ।) कस्तत्र हेतुः ।

अभिमन्युः—[3]दोण्हं राहामाहवाणं चापलं जेव ।

पौर्णमासी—वीर, केन तवेदं वर्णितम् ।

अभिमन्युः—[4]पिअवअस्सेण गोवद्धणेण ।

पौर्णमासी—वत्साभिमन्यो, चतुरंमन्योऽपि त्वमनार्यबुद्धिरसि । येन भोजेन्द्रवल्लभस्य कौटिल्यचक्रेण विभ्रम्यसे ।

अभिमन्युः—[5]अदिपसिद्धा एसा पउत्ती केण वा ण कहिज्जइ ।

पौर्णमासी—पुत्र, नूनं कर्णेजपानामुपजापेन लुप्तविवेकोऽसि । तदाकर्णय ।

---

१ तवाज्ञां ग्रहीतुम् ।

२ वार्षभानव्या मथुराप्रस्थाने ।

३ द्वयो राधामाधवयोश्चापलमेव ।

४ प्रियवयस्येन गोवर्धनेन ।

५ अतिप्रसिद्धैषा प्रवृत्तिः केन वा न कथ्यते ।

---

लता । तपान्ते निदाघान्ते ॥ वत्सेति । भोजेन्द्रः कंसः ॥ पुत्रेति । कर्णेज-

**अभिमन्युः**—¹आणवेहि ।

**पौर्णमासी**—वत्स, येन लावण्यगन्धलवलुब्धेन कंसशार्दूलेन स्वयमेव राधामृगी मृग्यते । तस्य दारुणस्य कंसशार्दूलस्य हस्तोपरि न्याय्यः कथमस्याः प्रक्षेपः ।

**अभिमन्युः**—²भअवदि, तत्थ का चिन्ता । सो क्खु कुसली होदु हिं सुहित्तमो गोवद्धणो, जेण विज्जामाहुरीहिं माहुरिन्दो वसीकिओ ।

**पौर्णमासी**—(सखेदम् । क्षणमनुध्याय ।) हंहो धन्यानां मूर्धन्य गोविन्द, मातुर्मातुलेयोऽसि । कथमल्पायुषां गोकुलद्वेषिणां मण्डलपातितामालम्बसे । तदद्य कयापि मर्यादया त्वां पर्यापयितुमिच्छामि ।

**अभिमन्युः**—³आणवेदु तत्थहोदी ।

**पौर्णमासी**—वत्स, सा काचिन्मत्सरकल्पितापि किंवदन्ती यदि त्वया नातथ्यतया प्रतीयते, ततः स्वयमेव चक्षुषोरपरोक्षीकृत्य यथेष्टं चेष्टनीयम् ।

**अभिमन्युः**—(सप्रश्रयम् ।) ⁴भअवदि, सिरोगहिदं दे णिदेसकुसुमम् ।

**पौर्णमासी**—(सानन्दम् ।) सोमानन, गोमानत्र भूयाः ।

---

१ आज्ञापय ।

२ भगवति, तत्र का चिन्ता । स खलु कुशली भवतु सुहृत्तमो गोवर्धनः, येन विद्यामाधुरीभिर्मथुरेन्द्रो वशीकृतः ।

३ आज्ञापयतु तत्रभवती ।

४ भगवति, शिरोगृहीतं ते निदेशकुसुमम् ।

---

घनो खलानामुपजापो भेदः । 'भेदोपजापौ' इत्यमरः ॥ भअवदीति । यथार्थ-

**अभिमन्युः**—[1]भअवदि, अम्बा मं पुणो पुणो भणादि—पुत्त, चन्दाअलिचण्डिअच्चणेण गोअद्धणो जहत्थणामा संवुत्तो । ता वहूडिया वितत्थ दीक्खाविज्जउत्ति ।

**पौर्णमासी**—मङ्गलमते, सर्वमङ्गलाराधने दीक्षितामविलम्बमेव वार्षभानवीं विद्धि ।

**अभिमन्युः**—[2]भअवदि, अणुकम्पिदो म्हि । (इति निष्क्रान्तः ।)

**वृन्दा**—(परिक्रम्य ।) वन्दे भगवतीम् ।

**पौर्णमासी**—(विलोक्य शुभाशीर्भिरभिनन्द्य च ।) वत्से, कामं कृतार्थासि । तदावेदय राधामाधवयोर्निकुञ्जकेलिमाधुरीम् ।

**वृन्दा**—

सर्वस्वं प्रथमरसस्य यः प्रथीयान्कंसारेरुदयति राधया विलासः ।
वक्तुं को विरमति तं जनः समन्तादानन्दस्तिरयति चेद्गिरां न वृत्तिम् ॥२॥

**पौर्णमासी**—(सानन्दम् ।) पुत्रि वृन्दे,

हरिरेष न चेदवातरिष्यन्मथुरायां मधुराक्षि राधिका च ।
अभविष्यदियं वृथा विसृष्टिर्मकराङ्कस्तु विशेषतस्तदात्र ॥ ३ ॥

तदद्य गोष्ठमध्ये तवोपसत्तिर्मां विसारयति ।

---

१ भगवति, अम्बा मां पुनः पुनर्भणति—पुत्र, चन्द्रावलिचण्ड्यर्चनेन गोवर्धनो यथार्थनामा संवृत्तः । तस्माद्वधूरपि तत्र दीक्षायितामिति ।

२ भगवति, अनुकम्पितोऽस्मि ।

---

नामा । गवां वर्धनं वृद्धिर्वर्तते यस्य सेत्यर्थः ॥ **मङ्गलमते इति** । सर्वमङ्गलायाः सर्वमङ्गलस्य कृष्णस्य चाराधने ॥ **सर्वस्वमिति** । यः प्रथीयान् विलासः प्रथमरसस्य शृङ्गाररसस्य सर्वस्वं तं वक्तुं तिरयति निवर्तयति ॥ **हरिरिति** । इयं

**वृन्दा**—भगवति, त्वरते कोऽपि गरीयानर्थः । तदत्र ललितामपेक्षमाणासि ।

**पौर्णमासी**—कीदृशोऽयम् ।

**वृन्दा**—पूर्वेद्युरादिष्टासि गोविन्देन । यथा—

आहर गौरीतीर्थे मधुरश्रियं तत्र रन्तुमिच्छामि ।
पद्मावलम्बिकरया प्रियया पद्मावतंसिकया ॥ ४ ॥

**पौर्णमासी**—युक्तमादिष्टं यदद्य सौभाग्यपूर्णिमा । तथा हि—

प्रसूनैरद्भुतैः कान्ता कान्तेन श्रावणीदिने ।
प्रसाधिता प्रसिद्धेन सौभाग्येन विवर्धते ॥ ५ ॥

ततः ।

**वृन्दा**—ततश्च तद्वचे शारिकामुखतः सखीसंसदि संचारिते यथार्थतस्तर्कितराधार्थसिद्धिरपि पद्मा ललितां कटाक्षयन्ती हठादवादीत्—

उत्फुल्लमूर्तेः सममुल्लसन्त्याश्चन्द्रावलेश्चन्द्रकमण्डलेन ।
म्लास्यन्ति सौभाग्यभरप्रभाभिर्गवान्धगोपीवदनाम्बुजानि ॥ ६ ॥

**पौर्णमासी**—(विहस्य ।) ततस्ततः ।

---

विसृष्टिः । विश्वमेव समस्तमित्यर्थः । वृथा व्यर्था । विशेषतस्तु कन्दर्पः । तेनाधुना विश्वं कामश्च सफलीभूतं जातमिति भावः ॥ **आहरेति** । मधुरश्रियं वसन्तशोभाम् । तेन कल्पितस्य वसन्तस्य वर्तमानायाश्च वर्षायाश्च पुष्पादिपरिसरसमृद्धिभिर्महान् विहारो भविष्यतीति भावः ॥ **प्रसूनैरिति** । प्रसाधिता अलंकृता सती ॥ **यथार्थत इति** । 'आहर गौरीतीर्थे' इत्यस्मिन् पद्ये 'पद्मावलम्बिकरया प्रियया' इत्यस्य पद्मां स्वसखीमवलम्बते करो यस्यास्तया प्रियया चन्द्रावल्या कल्पिता अर्थस्य करिष्यमाणत्वात् ॥ **उत्फुल्लेति** । चन्द्रावलेश्चन्द्रावल्याश्चन्द्रकमण्डलेन कृष्णेन सममुल्लसन्त्याः ॥ **तत इति** । अवधीरयन्ती अवजानन्ती ।

**वृन्दा**—ततश्च सेरया दृष्टिमुद्रयैव तामधीरामवधीरयन्ती ललिता मया सह राधामुपसाद्य कल्ये प्रस्थानाय तामतिसंभ्रमं लम्भयामास। पश्य वृत्तेऽद्य यामे सेयं नाजगाम ।

(प्रविश्य ।)

**ललिता**—[1]सहि वुन्दे, जुत्तं गव्वाइदं पउमाए। दाणिं जाणिदम् । तत्थ पत्थाणे कुदो अम्हाणं जोग्गदा ।

**पौर्णमासी**—पुत्रि, कथमेवम् ।

**ललिता**—[2]भअवदि, तुम्ह पुरदो अम्हाणं तिण्णदोहग्गसल्लेण किं उग्घडिदेण ।

**पौर्णमासी**—वत्से, शुश्रूषुरस्मि । वर्ण्यताम् ।

**ललिता**—(सास्रम् ।) [3]अज्जे, गोरपट्टसुत्तेण गण्ठिदा एक्का दिव्वमाला पिअसहीए कण्हस्स दिण्णा । सा अम्हेहिं पउमिआधम्मिल्ले तक्कालं ज्जेव दिट्ठा ।

---

१ सखि वृन्दे, युक्तं गर्वायितं पद्मया । इदानीं ज्ञातम् । तत्र प्रस्थाने कुतोऽस्माकं योग्यता ।

२ भगवति, तव पुरतोऽस्माकं तीक्ष्णदौर्भाग्यशल्येन किमुद्घाटितेन ।

३ आर्ये, गौरपट्टसूत्रेण ग्रथितैका दिव्यमाला प्रियसख्या कृष्णाय दत्ता । सास्माभिः पद्माधम्मिल्ले तत्कालमेव दृष्टा ।

---

कल्ये प्रातः । अतिसंभ्रममतित्वराम् ॥ **अज्जे इति** । गौरपट्टसूत्रेण ग्रथिता कृष्णाय दत्तेति द्वादश्यां पवित्रधारणोत्सवे इति ज्ञेयम् । सा पद्माधम्मिल्ले तत्कालमेव तस्मिन्दिने दृष्टा । इदमत्र तत्त्वम्—द्वादश्यामेव पद्माधम्मिल्ले माल्या दृष्टा । किंतु राधिकादत्तकृष्णमालेयमिति विशेषज्ञानं नासीत् । पौर्णमास्याः प्रातस्तु तासां गर्वहेतुज्ञानार्थं यथादृष्टतन्माल्यशिल्पकौशलं पृष्टया राधया प्रोक्तम्—'मयैव दत्ता सा कृष्णाय' इति श्रुत्वा ललिता खेदयुक्ताभूदिति । अत एव 'दाणिं जाणिदम्' इत्यु-

**पौर्णमासी**—स्थाने ग्लानिरियम्। बाढमसांप्रतमेतद्गोविन्दस्य।

**वृन्दा**—शान्तममङ्गलम्।

**पौर्णमासी**—वृन्दे, कथ्यतां किं नामेदम्।

**वृन्दा**—वर्णितं मे मनुष्यवाक्यया तया कक्खटिकया—कदम्बशाखाया मालामालम्ब्य कालिन्दीमवगाढे वनमालिनि संप्रवृत्ते च केतकीपरागचक्रचण्डे मरुन्मण्डले पद्मा किलेमां जहार। मारुतस्तु मुधा कलङ्कं जगामेति।

**ललिता**—धुत्ते, मुद्ध णं वञ्चणम्।

**वृन्दा**—पुष्पमञ्जरीभ्यः शपे।

**ललिता**—(विहस्य।) हला, सच्चं सच्चम्। अम्ह पुरदो अप्पणो सोहग्गं विक्खेवेन्ती पउमिआ मालं विवरेदि। कण्हमित्ताणं अग्गदो उण णं संवरेदि।

**पौर्णमासी**—पुत्रि ललिते, स्फुटमत्र पूर्णिमायां युष्माकमनुद्यमाय पद्मया तां छद्मचातुरीं प्रसार्य गौरीतीर्थे चन्द्रावली लम्भिता।

**वृन्दा**—युक्तमाह भगवती। तदद्य गौरीतीर्थे राधिकोपनीतिः कल्याणी मे न प्रतिभाति।

---

१ धूर्ते, मुग्धेदं वञ्चनम्।

२ हला, सत्यं सत्यम्। अस्मत्पुरत आत्मनः सौभाग्यं विख्यापयन्ती पद्मा मालां विवृणोति। कृष्णमित्राणामग्रतः पुनरेनां संवृणोति।

---

क्तम्। तेन पूर्वेद्युस्तत्र गमनाध्यवसाय आसीदिति॥ **स्थान इति।** स्थाने युक्ता ग्लानिरित्यर्थः। 'युक्ते क्ष्मादावृते स्थानं' इत्यमरः। बाढमसांप्रतमतिशयेनायोग्यमेतत्। अनुचितं कृतं कृष्णेनेत्यर्थः॥ शान्तममङ्गलम्। नास्त्यमङ्गलमित्यर्थः॥ **अम्ह इति।** कृष्णमित्राणामग्रतः संवृणोतीति तदानीं कृष्णसङ्गस्थितत्वेन तेषां-

(प्रविश्य ।)

विशाखा—[1]गोउलेश्वरीमुहादो अज्ज सोहग्गपूण्णिमं सुणिअ करालए चन्दाअली अप्पभत्तुणो मल्लस्स पासे पत्थावीअदि ।

ललिता—(सहर्षम् ।) [2]विसाहे, इट्ठदेओ सरोअणाहो दे पसीददु । ता तुवरीअदु ।

पौर्णमासी—पुत्रि वृन्दे, कामप्यघतनीमभिमन्योर्दारुणां दुर्मन्त्रिमुद्रां राधायामावेद्य मयाप्यस्याः शङ्कापङ्कावलीसंक्षालनाय गौरीतीर्थे भवितव्यम् ।

वृन्दा—भगवति, पूर्वेण गौरीतीर्थं लवङ्गकुञ्जस्य प्राङ्गणे सविशाखया राधया सार्धं साधयतु तत्रभवती । तावदावां माधवमासादयावः ।

(पौर्णमासी विशाखया सह निष्क्रान्ता ।)

ललिता—(वृन्दया सह परिक्रम्य ।) [3]हला, पेक्खीअदु डाहिणे एसा दूरदो सेबाए समं जप्पन्ती पउमा ।

वृन्दा—सखि, नासंगतं व्याहरेद्विशाखा । (इत्यग्रतो गत्वा सविमर्शम् ।) सखि, परमौत्सुक्यसंभूतेन भूरिणा संभ्रमेण संभेदिते राधिकाविनयमनिर्धार्य तूर्णमावां विदूरमागते । तदत्र गङ्गापारे पौर्णमासीं क्षणं प्रतिपालयावः । (इति निष्क्रान्ते ।)

---

१ गोकुलेश्वरीमुखतोऽद्य सौभाग्यपूर्णिमां श्रुत्वा करालया चन्द्रावली आत्मभर्तुर्मल्लस्य पार्श्वे प्रस्थाप्यते ।

२ विशाखे, इष्टदेवः सरोजनाथस्ते प्रसीदतु । तत्त्वर्यताम् ।

३ हला, पश्यतु दक्षिणे एषा दूरतः शैव्यया समं जल्पन्ती पद्मा ।

---

एतेनैव वाहिता मालेति ज्ञातत्वात् ॥ **गोउलेश्वरीति** । आत्मभर्तुर्मल्लस्य गोवर्धनमल्लस्य ॥ **पुत्रीति** । आवेद्य ज्ञात्वा ॥ पूर्वेण गौरीतीर्थमिति गौरीतीर्थस्य समीपवर्ति पूर्वदेशे ॥ ································**सखीति** । संभेदिते संगमिते

(ततः प्रविशतः पद्माशैब्ये ।)

**पद्मा**—[1]सहि सेव्वे, मा क्खु दुम्मणा होहि ।

**शैव्या**—[2]पउमे, परमाहिट्ठस्स अलाहेण सलाहवं चित्तं समाधादुं ण क्खमम्हि ।

(नेपथ्ये ।)

[3]पउमे, चन्दाअली आणिज्जउ गोअद्धणस्स पासम्मि झत्ति । णिव्वट्टइ वच्छा जह कुसुमेहिं सुणेवच्छा ।

**शैव्या**—[4]पउमे, सुदं जं अज्जिआ कराला तं ज्जेव जप्पगरलं पुणो उग्गिरदि ।

**पद्मा**—[5]हला, अमिअं क्खु एदं, जं पिविअ उवलद्धवलम्हि जादा ।

**शैव्या**—(सवैलक्ष्यम् ।) [6]हला, कधं विअ ।

**पद्मा**—[7]मुद्धिए, गोअद्धणस्स गिरिणो पासे ज्जेव तं गौरीतित्थम् ।

**शैव्या**—(सहर्षम् ।) [8]सअलत्थपण्डिदासि । ता उट्ठेहि । चन्दाअलिअं तत्थ णेम्ह ।

---

१ सखि शैव्ये, मा खलु दुर्मना भव ।

२ पद्मे, परमाभीष्टस्यालाभेन सलाघवं चित्तं समाधातुं न क्षमास्मि ।

३ पद्मे, चन्द्रावली आनीयतां गोवर्धनस्य पार्श्वे झटिति । निर्वर्तते वत्सा यथा कुसुमैः सुनेपथ्या ।

४ पद्मे, श्रुतं यदार्या कराला तमेव जल्पगरलं पुनरुद्गिरति ।

५ हला, अमितं खल्वेतत्, यत्पीत्वा उपलब्धबलास्मि जाता ।

६ हला, कथमिव ।

७ मुग्धे, गोवर्धनस्य गिरेः पार्श्व एव तद्गौरीतीर्थम् ।

८ सकलार्थपण्डितासि । तदुत्तिष्ठ । चन्द्राविलिकां तत्र नेष्यावः ।

---

आवाम् ॥ **पउमे इति** । निर्वर्तते निष्पादयति ॥ **साचीकृतेति** । वृत्तसरलां

**पद्मा**—[1]पंढमं चेअ चन्दाअली मए चालिदा । ता तुवरेहि । णं अणुसरम्ह ।

(इत्युभे परिक्रामतः ।)

**शैव्या**—[2]पंउमे, गोरीकिदे जो क्खु संपादिदो सो कहिं उवहारो ।

**पद्मा**—[3]मेहुमङ्गलहत्थे समप्पिदोत्थि ।

**शैव्या**—[4]विवक्खउलस्स उक्करिसं तक्किअ उत्तमामि ।

**पद्मा**—[5]मा क्खु उत्तम्म । जं एताए मालाए दंसिदाए णिरज्झवसाओ किदो मए विवक्खपक्खो ।

(शैव्या सहर्षं पद्मामालिङ्गति ।)

**पद्मा**—

सोहग्गपुण्णिमाहे गोरीतीत्थम्हि फुल्लिदे महुणा ।
[6]अज्ज रमन्तीं हरिणा सुहेण चन्दाअलीं पेक्ख ॥ ७ ॥

(नेपथ्ये 'सोहग्गपुण्णिमाहे' इत्यादि पठ्यते ।)

**शैव्या**—(साकूतं विलोक्य ।) [7]हला, इमाए मुहं वक्कीकदुअ बीअच्छसरेण पठन्तीए कक्खडिआए अम्हे उवहसिज्जम्ह ।

---

१ प्रथममेव चन्द्रावली मया चालिता । तत्त्वरस्व । एनामनुसरावः ।

२ पद्मे, गोरीकृते यः खलु संपादितः स कुत्रोपहारः ।

३ मधुमङ्गलहस्ते समर्पितोऽस्ति ।

४ विपक्षकुलस्योत्कर्षं तर्कयित्वोत्ताम्यामि ।

५ मा खलूत्ताम्य । यदेतया मालया दर्शितया निरध्यवसायः कृतो मया विपक्षपक्षः ।

६ सौभाग्यपूर्णिमायां गोरीतीर्थे फुल्लिते मधुना ।
अद्य रममाणां हरिणा सुखेन चन्द्रावलीं पश्य ॥

७ हला, एतया मुखं वक्रीकृत्य बीभत्सस्वरेण पठन्त्या कक्खटिकया वयमुपहस्यामहे ।

पद्मा—(सस्मितम्।) दुट्ठे मक्कडि, तुण्डं दे डहिस्सम्।

(नेपथ्ये।)

पॅउमिए, चिट्ठ चिट्ठ। सुण्णं तुज्झ घरं गदुअ णअणिआइं गिलिस्सम्।

शैव्या—हॅला, सच्चं सच्चं गिलिस्सदि जं एसा तं चेअ पढन्ती धाविदा।

पद्मा—माँ चिन्तेहि। घरे अज्जिआ कराला चिट्ठदि। (इति परिक्रम्य संस्कृतेन।) पश्य पश्य।

साचीकृताङ्गमिह सव्यकरेण यष्टिं
विष्टभ्य वृत्तसरलामुपकक्षकूपम्।
तिष्ठन्नधो विटपिनः पशुवृन्दचारी
रारीति गीतिमधुना सुबलस्तनोति॥ ८॥

शैव्या—(परिक्रम्य।) हॅला, पूर्वेण संकरिसणकुण्डं चन्दाअली दीसइ।

पद्मा—(सहर्षं संस्कृतेन।)

अयं पुरः सेरमुखारविन्दः प्रयाणलीलाकृतकुम्भिनिन्दः।
कलेवरद्योतिहृताक्षितन्द्रश्चन्द्रावलीं विन्दति कृष्णचन्द्रः॥ ९॥

---

१ दुष्टे मर्कटि, तुण्ड ते धक्ष्यामि।
२ पद्मे, तिष्ठ तिष्ठ। शून्यं तव गृहं गत्वा नवनीतानि गिलिष्यामि।
३ हला, सत्यं सत्यं गिलिष्यति यदेषा तमेव पठन्ती धाविता।
४ मा चिन्तय। गृहे आर्या कराला तिष्ठति।
५ हला, पूर्वेण संकर्षणकुण्डं चन्द्रावली दृश्यते।

---

यष्टिम्। उपकक्षकूपं कक्षकूपसमीपे विष्टभ्य आलम्ब्य साचीकृताङ्गं यथा स्यात्तथा तिष्ठन्॥ अयमिति। कुम्भी गजः॥ प्रिये इति। भृङ्गारः पानपात्रझर्झरी॥

(ततः प्रविशति कृष्णश्चन्द्रावली च।)

कृष्णः—(वर्त्मावरुध्य।) प्रिये, दिष्ट्याद्य सौन्दर्यमकरन्दभृङ्गारायितासि ममाक्षिभृङ्गयोः।

चन्द्रावली—[1]मुञ्च मग्गम्। जं गौरीतित्थं गदुअ कच्चाअणिअं अच्चिस्सम्।

कृष्णः—(सस्मितम्।)

लब्धं मामवलोक्य तन्वि पुरतो रोमालिरभ्युद्गता
नेत्रे पाद्यविधिं क्षरज्जलभरैः प्रीत्यार्पयांचक्रतुः।
वक्षश्च स्खलदुत्तरीयमदिशद्दिव्यासनं संभ्रमा-
द्वामायास्तव दक्षिणः परिकरो दिष्ट्याद्य वृत्तो मयि॥ १०॥

सख्यौ—(उपसृत्य।) [2]सहि, सन्ति भूरिणो मग्गा। ता एकस्सिं णिरुद्धे णिरुद्धा ण होम्ह।

चन्द्रावली—(साचिभ्रीवमालोक्य।) [3]हला, दिट्ठिआ तुम्हेहिं सहिदम्हि संवुत्ता।

कृष्णः—(स्वगतम्।) कथमद्य राधामभिसिसारयिषोर्ममान्तिके चन्द्रावलिरुपस्थिता।

पद्मा—(जनान्तिकम्।) [4]चन्दमुह, पउमावलम्बिकरए त्ति तुह मणोरधं सुणिअ छलेण मए चन्दाअली लम्भिदा।

---

१ मुञ्च मार्गम्। यद्गौरीतीर्थं गत्वा कात्यायनीमर्चिष्यामि।

२ सखि, सन्ति भूरिशो मार्गाः। तदेकस्मिन्निरुद्धे निरुद्धा न भवामः।

३ हला, दिष्ट्या युष्माभिः सहितास्मि संवृत्ता।

४ चन्द्रमुख, पद्मावलम्बिकरयेति तव मनोरथं श्रुत्वा छलेन मया चन्द्रावली लम्भिता।

---

कथमिति। अभिसिसारयिषोः अभिसारयितुमिच्छोः॥ धृतेति। धृता पद्मायाः

**कृष्णः**—(स्वगतम् ।) आं, ज्ञातम् । पद्ममण्डनमभिलष्यता मयैव दत्तान्तरासि । किं ते दूषणम् । (प्रकाशम् ।) सखि, प्रसिद्धैव पद्मायाः पद्मनाभपक्षपातिता ।

**पद्मा**—[1]अदो तुरिदं गौरीतित्थं लम्भेहि चन्दाअलिअम् ।

**कृष्णः**—(स्वगतम् ।) चन्द्रावलेरागतिरेव राधिकोद्यमप्रतिबन्धिनी वृत्ता । तदेनामेव निर्व्यलीकभावां तावत्प्रमोदयन्स्वं मनो विनोदयामि । (प्रकाशम् ।)

धृतपद्मोत्सवसंततिरलब्धदोषोदया सदा स्फुरती ।
सखि कृष्णपक्षपूर्णं चन्द्रावलिरद्भुता त्वमसि ॥ ११ ॥

(इत्यग्रे परिक्रम्य ।) कुरङ्गाक्षि, पश्य काननस्य कमनीयताम् ।

**पद्मा**—[2]हेला, एसो पुरदो सुरङ्गणामा कण्हस्स कुरङ्गो । जस्स घरिणी सा किदत्थि रङ्गिणी णाम कुरङ्गी ।

**कृष्णः**—(सचकितं नेपथ्ये कर्णं दत्त्वा स्वगतम् ।) नूनमागता राधा यदयं रङ्गिणीकण्ठध्वनिर्दरोदञ्चति ।

**पद्मा**—[3]कधं एसो सुरङ्गो दक्खिणाहिमुहं धाइदो ।

**कृष्णः**—(पुनरात्मगतम् ।) निष्टङ्कितमेव रङ्गिणीकण्ठशब्देनायमाकृष्टः कुरङ्गो गौरीतीर्थं जगाम । संकर्षणतीर्थतीरवनलेखायां विलम्बमानः क्षणमुदर्कं यामि ।

---

१ अतस्त्वरितं गौरीतीर्थं लम्भय चन्द्रावलीम् ।

२ हला, एष पुरतः सुरङ्गनामा कृष्णस्य कुरङ्गः । यस्य गृहिणी सा कृतास्ति रङ्गिणी नाम कुरङ्गी ।

३ कथमेष सुरङ्गो दक्षिणाभिमुखं धावितः ।

---

पद्मानां चोत्सवसंततिर्यया । न लब्धो दोषाणां दोषायां रात्रौ चोदयो यस्याः । कृष्णस्य मम, पक्षे कृष्णपक्षे च पूर्णा ॥ **निष्टङ्कितमिति** । उदर्कमुत्तरकालम् ॥

पद्मा—

[1]णअपउमिणीसहस्सं अहमणरंसुत्तरङ्गवित्थारि ।
उअ गोउलं विअ पुरो सरोअरं रेहदि प्फारम् ॥ १२ ॥

कृष्णः—प्रिये, पश्य पश्य ।

मित्रे विचित्रमनुरागभरं वहन्ती
संवर्धितालिनिकरा स्वरसोदयेन ।
सत्कर्णिकोज्ज्वलरुचिर्भुवने समन्ता-
ल्लक्ष्मीं तनोति भवतीव सरोजिनीयम् ॥ १३ ॥

शैब्या—[2]णं मणोहरं पउमिणीं कीस कलाणिहिमलाणं करेदि ।

पद्मा—(चन्द्रमपदिश्य साकूतम् ।)

[3]सूराणुरत्तहिअआ इअं पउमिणी पसारिदामोआ ।
इह ण तुमं क्खणराओ ताराहीस क्खिवेहि करम् ॥ १४ ॥

---

१ नवपद्मिनीसहस्रमघमथनरसोत्तरङ्गविस्तारि ।
पश्य गोकुलमिव पुरः सरोवरं राजते स्फारम् ॥

२ एनां मनोहरां पद्मिनीं कस्मात्कलानिधिम्लानां करोति ।

३ सूरानुरक्तहृदया इयं पद्मिनी प्रसारितामोदा ।
इह न त्वं क्षणरागस्ताराधीश क्षिप करम् ॥

---

**णअपउमिणीति** । पद्मिन्यः कमलानि स्त्रियश्च । रसो जलं शृङ्गारादिरसश्च ॥ **मित्रे इति** । मित्रे सूर्ये मयि च । स्वस्य रसस्य मकरन्दस्य शृङ्गारस्य चोदयेन । संवर्धितोऽलिनिकरो भ्रमरसमूहः, आलिनिकरः सखीसमूहश्च यया । सत्कर्णिकाभिः, पक्षे सुन्दरकर्णालंकारैरुज्ज्वला रुचिर्यस्याः । भुवने जले लोके च । लक्ष्मीं शोभाम् ॥ **एनामिति** । अपदेशेन कलानिधिः कृष्णः । म्लानामिति राधिकापक्षे निहितसौभाग्यातिशयेन ॥ **सूराणुरत्तेति** । सूरे सूर्ये गोवर्धनमल्लाभिधशूरे च । दन्त-

**कृष्णः**—पद्मे, नात्र तारापतिरपराध्यति। यदियं पद्मिनी चञ्चलया पद्मया सायं मुच्यमाना म्लायति।

**चन्द्रावली**—(सस्मितं पुरो विलोक्य संस्कृतेन।)

समदमधुपलौल्योत्सेकमालोक्य शङ्के
विहसति लतिकाली पुष्पशोभाभरेण।
विसृजति मकरन्दच्छद्मना बाष्पबिन्दू-
नियमतिमृदुरेका स्नेहतः स्वर्णयूथी॥ १५॥

**कृष्णः**—प्रिये, पश्य पश्य।

अयमुच्चशिराः कदम्बराजः स्फुरदिन्दिन्दिरवृन्दबन्दिगीतः।
सुरभीकुलपुच्छचामरालीमरुदावीजितविग्रहश्चकास्ति॥ १६॥

**चन्द्रावली**—[१]अम्हहे, ललिदा वुन्दावणलच्छी।

(ततः प्रविशति ललिता वृन्दा च।)

**ललिता**—(पुरो दृष्ट्वा सव्यथम्।) [२]कैक्खडं पुरादो संकडं एदो।

---

१ अम्महे, ललिता वृन्दावनलक्ष्मीः।
२ कठिनं पुरतः संकटमेतत्।

---

सकारतालव्यशकाराभ्यां(रलयोः) प्राकृते भेदाभावात् श्लेषः। आमोदः सुगन्धमानन्दश्च। हे ताराधीश चन्द्र, पक्षे ता राहीस तत्तस्माद्धेतोः हे राधेश। इह पद्मिन्यां चन्द्रावल्यां च। करं किरणं हस्तं च। न क्षिप। त्वं क्षणरागः क्षणमात्रं रागो रक्तिमा अनुरागश्च यस्य स तथा॥ **पद्म इति**। तारापतिश्चन्द्रः कृष्णश्च। पद्मया लक्ष्म्या सख्या च। मुच्यमाना त्यज्यमाना। रात्रौ पद्मवने लक्ष्मीर्न तिष्ठतीति प्रसिद्धम्। पक्षे सायं पद्मया चन्द्रावलीमभिसार्यते कुत इत्यर्थः॥ **समदेति**। लतिकाली अन्यगोपीस्थानीया स्वर्णयूथी चन्द्रावलीस्थानीया स्नेहतो बाष्पबिन्दूनिति स्वस्य प्रेमाधिक्यं सूचितम्॥ **अयमिति**। इन्दिन्दिरवृन्दानि भ्रमरसमूहास्त एव बन्दिनः स्तावकास्तैर्गीतः। अपदेशेन सर्वासामाश्रयोऽप्ययमहं भव-

**वृन्दा**—हन्त, दुर्लङ्घ्यशासना किल कराला । तत्कथमद्य पद्मयात्र चन्द्रावलिरुपनीता ।

**ललिता**—[1]हला, सअलविज्जाविअड्ढासि । ता कड्ढेहि इदो कण्हम् ।

**वृन्दा**—

स्वस्य प्रेममणीनां गौरवभाजामियं वरा यात्री ।
हरिणा परिहरणीया कथं नु चन्द्रावली भविता ॥ १७ ॥

**ललिता**—(संस्कृतेन ।)

यस्योपलभ्य गन्धं गौरवकुलमाशु चौरवद्भ्रमति ।
उद्भटमनुरागभटं तं रञ्जितनागरं नौमि ॥ १८ ॥

**वृन्दा**—सखि, युक्तं ब्रवीषि । किंतु दाक्षिण्यमुद्रेयं चन्द्रावल्या कृष्णस्य ततः खल्वमुं दुराकर्षं कथयामि ।

**ललिता**—[2]वुन्दे, सच्चं भणासि । ता इमस्सिं अच्चाहिदे किं सरणम् ।

**वृन्दा**—प्रथमं गोष्ठीमाविश्य तत्त्वमवधारयावः ।

(इत्युभे परिक्रामतः ।)

**शैब्या**—(विलोक्य जनान्तिकम् ।) [3]हला पउमे, हन्त णूणं गोरीतित्थे राही संगदा । पेक्ख तद्दिसादो ललिदा मिलदि ।

---

१ हला, सकलविद्याविदग्धासि । तत्कर्षय इतः कृष्णम् ।

२ वृन्दे, सत्यं भणसि । तदस्मिन्नत्याहिते किं शरणम् ।

३ हला पद्मे, हन्त नूनं गौरीतीर्थे राधा संगता । पश्य तद्दिशातो ललिता मिलति ।

---

निकट एव चकास्तीति सूचितम् ॥ **गौरवभाजामिति** । अस्या घृतस्नेहस्यादरमयत्वात् ॥ **यस्येति** । यस्यानुरागभटस्य मधुस्नेहस्येत्यर्थः । 'भटा योधाश्च

**पद्मा**—कों णो हाणी जं हरिणा दुप्परिहरा पिअसही।

**ललिता**—(उपसृत्य।) हला चन्दाअलि, वल्लहासिणेहाणहिण्णस्स कुरङ्गीसङ्गभुअङ्गस्स कुरङ्गस्स घरे ण क्खु अम्हेहिं रङ्गिणीवासणिज्जा। जं इमिणा मासब्भन्तरे वि सा कालसारकुमारी ण सुमरीअदि ता एत्थ तुमं सक्खिणीं कादुं आअदम्हि।

(चन्द्रावली स्मयते।)

**कृष्णः**—(स्वगतम्।) हन्त, मदर्थमागता ललिता। (चन्द्रावलीमालोक्य छलमालम्बते। प्रकाशम्।) ललिते, हृदयेङ्गितमविज्ञाय मुधा कुरङ्गमुपालभसे। तदेष संदेशस्त्वया तस्यामावेद्यताम्।

हरिणाभिलप्यमाणा सारङ्गरमणि सदा त्वमत्रासि।
तदमुं त्वद्वशहृदयं हृदयंगमलोचने विद्धि॥ १९॥

**पद्मा**—(जनान्तिकम्।) कण्ह, अप्पणो पिअजणं लद्धोसि। ता जुत्तं अजोअजोग्गाणं अम्हाणं विसज्जणम्।

---

१ का नो हानिः यद्धरिणा दुष्परिहरा प्रियसखी।

२ हला चन्द्रावलि, वल्लभास्नेहानभिज्ञस्य कुरङ्गीसङ्गभुजङ्गस्य कुरङ्गस्य गृहे न खल्वस्माभी रङ्गिण्यावासः कारयितव्यः। यदनेन मासाभ्यन्तरेऽपि सा कालसारकुमारी न स्मर्यते तदत्र त्वां साक्षिणीं कर्तुमागतास्मि।

३ कृष्ण, आत्मनः प्रियजनं लब्धोऽसि। तद्युक्तमयोगयोगानामस्माकं विसर्जनम्।

---

योद्धारः' इत्यमरः॥ 'अत्याहितं महाभीतिः' इत्यमरः॥ **का णो इति**। नः अस्माकं का हानिः॥ **स्मयत इति**। कृष्णसारमपदिश्य कृष्णं प्रति इतो निष्क्रम्यतामित्यनया व्यज्यते तदसंभवमिति स्मयः॥ **हरिणेति**। हरिणा हरिणेन कृष्णेन चाभिलप्यमाणा सदा त्वमसि। हे सारङ्गरमणि मृगकान्ते, सारङ्गयतीति

**कृष्णः**—

करवाणि हन्त दिव्यं दिव्याङ्गि मदोन्नतासु गोपीषु ।
अनुरागितां सखि दधे राधागन्धिषु न वामासु ॥ २० ॥

**पद्मा**—(सदर्पस्मितम् ।) सहि ललिदे, अचरिअं अचरिअम् । तुमं क्खु अणुराहा भणिज्जसि । ता कीस अज्ज राहाए उअअं विणा उइदासि ।

**ललिता**—(संस्कृतेन ।)

रोलम्बीनिकुरम्बं चुम्बति गण्डं पिपासया तस्य ।
सरति तृषार्तः सरसीं स करीन्द्रस्तं पुनर्न हि सा ॥ २१ ॥

**पद्मा**—

एकं धीमदि सेब्वे पहेलिअं मे सहेलि जाणेहि ।
चित्तफलअम्मि लिहिदा का रेहइ माहवस्स सदा ॥ २२ ॥

---

१ सखि ललिते, आश्चर्यमाश्चर्यम् । त्वं खल्वनुराधा भण्यसे । तत्कस्मादद्य राधाया उदयं विना उदितासि ।

२ एकां धीमति शैव्ये प्रहेलिकां मे सखि जानीहि ।
चित्तफलके लिखिता का राजते माधवस्य सदा ॥

---

सारसः कृष्णस्तस्य कान्ते इति च ॥ **करवाणीति** । राधागन्धिषु वामासु प्रतिकूलासु गोपीष्वनुरागितां न दधे । तव प्रतीत्यर्थं दिव्यं शपथं करवाणि । 'हरिणाभिलष्यमाणा' इत्यादिना रागस्त्वस्यानुरञ्जनार्थं वाक्यमात्रेणैव व्यञ्जित इति भावः । श्लेषोऽर्थः पद्मां ज्ञापयितुमभिप्रेतः । वस्तुतस्तु राधागन्धिषु गोपीष्वनुरागितां दधे । किमुत राधायामिति भावः । मदोन्नतासु परमाकर्षकमधुस्नेहवतीत्वेन मम परमसुखदो मद उत्पद्यत एवेति भावः । न वामास्वर्थात्तत्प्रतिकूलास्वनुरागितां न दधे इति दिव्यं करवाणीति ॥ **सखीति** । ज्योतिःशास्त्रे विशाखानक्षत्रस्योदयानन्तरमेवानुराधाया उदयसंभवात् ॥ **रोलम्बीति** । रोलम्बीनिकुरम्बं भ्रमरीस-

शैव्या—सहि चन्दाअली ।

वृन्दा—(सस्मितम् ।) साधु विज्ञातम् । चन्द्रमण्डलावलिमण्डनेन चित्रं खलु मापतेः फलकं शतचन्द्रमाचक्षते ।

कृष्णः—(स्वगतम् ।) अवदातशीलेयम् ।

(चन्द्रावली सलज्जमपसव्ये प्रयाति ।)

ललिता—

मम वाहरेहि वुन्दे पहेलिअं दिप्पहेलिविण्णाणे ।
पिअसहि किमहिक्खाए लिक्खिज्जइ माहवो भुअणे ॥ २३ ॥

वृन्दा—सखि, राधाभिख्यया ।

---

१ सखि चन्द्रावली ।

२ मम व्याहर वृन्दे प्रहेलिकां दीप्रहेलिविज्ञाने ।
प्रियसखि किमभिख्यया लक्ष्यते माधवो भुवने ॥

---

मूहस्तस्य करीन्द्रस्य गण्डं कर्णाघातैर्मुहुर्मुहुरनाहूतं सदपि पिपासया तृष्णया चुम्बति । तृषार्तः सन् करीन्द्र एव सरसीं सरति याति । सा सरसी तु तं न याति । कृष्णोनानाहूता अपि यथा भवत्यो रतियाचिकाः कृष्णमभिसरन्ति, न च तस्य सुखलेशं कुर्वन्ति, प्रत्युत उद्वेगमेव तन्वन्ति, तथा राधाया न भवन्ति । राधां पुनरयमेवाभिसरति परमसुखसंपादनायेति भावः ॥ सस्मितमिति । भवत्योरेव प्रश्नोत्तराभ्यां श्लोकमिदमुदासीनविषयं करवाणीति व्यञ्जनाय मापतेर्लक्ष्मीपतेः फलकं चर्म आचक्षते पौराणिकाः । तेन 'चित्तफलअम्मि' इत्यत्र चित्रफलके इति, माधवस्य लक्ष्मीपतेरिति, चन्द्रावलीत्यत्र चद्रन्मण्डलपङ्क्तिरिति व्याख्या ॥ अवदातेति । अवदातशीला शुद्धशीला । 'अवदातः सिते शुद्धे (सितो गौरो)' इत्यमरः ॥ एताभ्यां प्रहेलिकया वर्णितः स्वपक्षोत्कर्ष आवाभ्यामन्यथा कृतः । इदानीमावाभ्यामपि कथं तथा न वर्ण्यते एताभ्यामन्यथाकर्तुमशक्यत्वादित्याह—मम वाहरेति । दीप्रहेलीनां श्रेष्ठप्रहेलिकानां विज्ञानं यस्याः हे तथाभूते,

**कृष्णः**—युक्तमिदं यद्वैशाखपर्यायौ माधवराधौ ।

**पद्मा**—[1]सेव्वे, अलं पहेलिआपसङ्गेण । सुहावेहि कमलिक्खण-रसेहिं अत्ताणअम् ।

**शैव्या**—(कमलाकरं विलोक्य ।)

[2]भमरस्स ताव पमदं पदोसमुदिदा कुमुद्दी कुणइ ।
जाव इअं पउमाली विन्दइ ण हु दिट्ठिमेदस्स ॥ २४ ॥

---

१ शैव्ये, अलं प्रहेलिकाप्रसङ्गेन । सुखय कमलेक्षणरसैरात्मानम् ।

२ भ्रमरस्य तावत्प्रमदं प्रदोषमुदिता कुमुद्वती कुरुते ।
यावदियं पद्माली विन्दति नहि दृष्टिमेतस्य ॥

---

कयाभिख्यया नाम्ना शोभया वा माधवो लक्ष्यते ॥ राधाभिख्ययेति राधानाम्ना । 'अभिक्षा(ख्या) नामशोभयोः' इत्यमरः । तथा हि वेदे—'राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते' इति । लोके च राधामाधव इति प्रसिद्ध्या लक्ष्यत इत्यर्थः । ततश्च राधाया माधव इति षष्ठीसमासेन परमोत्कर्षो व्यञ्जितो भवति । इदानीमपि यथा बिन्दुमाधववेणीमाधवादयस्तथा राधामाधव इति प्रसिद्धादेव प्रतिमा काचिदासीत्तदपदेशेन कृष्णमुद्दिश्येयमुक्तिरिति ॥ **वैशाखपर्यायाविति** । 'वैशाखे माधवो राधो' इत्यभिधानात् माधवशब्दस्य प्रसिद्धत्वेनाभ्यर्हितत्वात्पूर्व-निपातः । तेन किमभिख्ययेत्यस्य कयाभिख्यया केन नाम्नेत्यर्थः । तथा राधा-भिख्ययेत्यस्य राधस्याभिख्ययेति व्याख्या । कृष्णेन यदन्यथा व्याख्यातं तत्तासां व्याख्यानाशक्तिज्ञापनायैव ॥ **सेव्वे इति** । कमलेक्षणः कृष्णः ॥ **भमरस्सेति** । भ्रमरस्य, पक्षे कामुकत्वात् कृष्णस्य प्रदोषे रजन्यादौ मुदिता विकसिता, प्रकृष्ट-दोषेऽपि कुमुद्वती कुमुदं कुत्सितानन्दवतीत्वेन राधा च । पद्माली पद्मसमूहः,

**पद्मा**—[1]हला, सच्चं भणासि। तथा हि।

विज्जोदन्ती राहा पेक्खिज्जइ ताव तारआलीहिम्।
गअणे तमालसामे ण जाव चन्दाअली फुरइ॥ २५॥

**ललिता**—(विहस्य। संस्कृतेन।)

सहचरि वृषभानुजया प्रादुर्भावे वरत्विषोपगते।
चन्द्रावलीशतान्यपि भवन्ति निर्धूतकान्तीनि॥ २६॥

**कृष्णः**—(स्मित्वा।) किं वाचाटतया। संनिकृष्टस्य सुरभेः सौरभ्यमनुभूयताम्।

**वृन्दा**—(सस्मितम्।)

उल्लसति फुल्लगात्री का वल्ली नात्र माधवेऽभ्युदिते।
तन्नामतः प्रसिद्धां तथापि तां माधवीं नौमि॥ २७॥

**पद्मा**—(सवैमनस्यं परिक्रम्योच्चैः।) [2]हला चन्दाअलि, धुत्तो गोट्ठीरङ्गे संगमिअ विग्घेसजणणीपूअणे कीस सिढिलासि।

---

१ हला, सत्यं भणसि। तथा हि।

विद्योतमाना राधा प्रेक्ष्यते तावत्तारकालीभिः।
गगने तमालश्यामे न यावच्चन्द्रावलिः स्फुरति॥

२ हला चन्द्रावलि, धूर्तो गोष्ठीरङ्गे संगम्य विघ्नेशजननीपूजने कस्माच्छिथिलासि।

---

पद्मा आली सखी यस्याः सा चन्द्रावली च॥ **विज्जोदन्तीति**। तारकालीभिः सह राधा विशाखानक्षत्रं तमालश्यामे गगने तावद्विद्योतमाना प्रेक्ष्यते। पक्षे तारकालीभिर्विशाखाललिताप्रभृतिभिः। गगने तमालश्यामे इति व्यपदेशेन कृष्णे॥ **विहस्येति**। द्वयोः पद्ययोरर्थमेकश्लोकार्थेनैव चूर्णयिष्ये इति भावः॥ **सहचरीति**। वृषस्यभानुजनितया श्रेष्ठत्विषा, पक्षे वृषभानुजया राधया। कीदृशा। वरत्विषा। प्रादुर्भावे प्राकट्ये उपगते प्राप्ते सति॥ **स्मित्वेति**। सुरभेर्वसन्तस्य॥ **उल्लसतीति**। माधवे वसन्ते, कृष्णे च। माधवीं तन्नामलताम्, राधां च॥

**कृष्णः**—(सोपालम्भम् ।)

चन्द्रावलीं मामनुरुध्यमानां रुणद्धि पद्मे भवती बलेन ।
मल्लीं तमालाभिमुखं मिलन्तीं हिंस्रेव वल्ली पुरतः कराला ॥ २८॥

(प्रविश्य ।)

**कराला**—[1]चिट्ठध रे, चिट्ठध । दिट्ठिआ मग्गो चेअ लद्धात्थ ।

(सर्वाः परावृत्य संभ्रमं नाटयन्ति ।)

**शैव्या**—(अपवार्य ।) [2]पेउमे, हद्धी हद्धी । कधं एत्थ अम्हे विण्णादा बुड्ढिआए ।

**कराला**—[3]अम्मो, सच्चं चेअ जप्पिदं ताए णवणीअलम्पडाए वुड्ढमक्कडीए ।

(पद्मा सखेदं शैव्यामुखमीक्षते ।)

**ललिता**—(स्वगतम् ।) [4]वुड्ढमक्कडि कक्खडिए, सक्करामक्खिदं मक्खणं दे दाइस्सम् ।

**कृष्णः**—(अपवार्य ।) प्रिये, तिरोधानाय स्थानमपि ते न पश्यामि । यतः ।

सव्ये गिरिः स्फुरति दुर्गमतुङ्गश्रृङ्गो
गाः पालयत्यहह दक्षिणतस्तथार्यः ।

---

१ तिष्ठत रे, तिष्ठत । दिष्ट्या मार्ग एव लब्धास्थः ।

२ पद्मे, हा धिक् हा धिक् । कथमत्र वयं विज्ञाता वृद्धया ।

३ अम्मो, सत्यमेव जल्पितं तया नवनीतलम्पटया वृद्धमर्कव्या ।

४ वृद्धमर्कटि कक्खटिके, शर्करात्रक्षितं नवनीतं ते दास्यामि ।

---

**चन्द्रावलीमिति** । मामनुरुध्यमानां मामनुरुन्धती । दैवादिकस्य रुधे रूपम् । हिंस्रा हिंसा इति ख्याता । कराला भयंकरी ॥ **अम्मो इति** । देशभाषाको-

भूः पृष्ठतो विरहिता वृतिभिः पुरस्ता-
त्क्रूरां विवेश जरती कतमात्र युक्तिः ॥ २९ ॥

**चन्द्रावली**—(स्वगतम् ।) [1]हन्त हन्त । अकण्डे कक्खसाए भविदव्वदा चण्डालीए चण्डिमा ।

**कराला**—(संरम्भमभिनीय ।) [2]पेच्छध भो, पेच्छध इमस्स कुसुम्मतेलकज्जलजालकालस्स कालभुअङ्गभअंकरलोअणञ्चलस्स चञ्चलस्स भुअङ्गत्तणम्, जं बारहमग्गं गमिदो इमिणा सअलाणं गोउलकुलङ्गणाणं मङ्गलो कुलधम्मो । (इति सशिरःकम्पं दृशौ विस्फार्य ।) अरे सामलआ, कस्स एसा जाअत्ति जाणासि । सुणाहि रे, णीसङ्कं सुणाहि । जो क्खु भोइन्दस्स दुदीउअप्पा तस्स महामल्लस्स ।

**कृष्णः**—करालिके, ततः किम् ।

**कराला**—(सक्रोधम् ।) [3]सच्चं सच्चं तुमं वणमज्झे अप्पाणं दुदिअं राआणं जाणासि । सो चेअ राअउलगामी गोट्ठणाहो अप्पणो ललाडं ताडिस्सदि ।

---

१ हन्त हन्त । अकाण्डे कर्कशाया भवितव्यता चण्डाल्याश्चण्डिमा ।

२ पश्यत भोः, पश्यत अस्य कौसुमतैलकज्जलजालकालस्य कालभुजङ्गभयंकरलोचनाञ्चलस्य चञ्चलस्य भुजङ्गत्वम्, यद्द्वादशमार्गं गमित एतेन सकलानां गोकुलकुलाङ्गनानां मङ्गलः कुलधर्मः । अरे श्यामला, कस्यैषा जायेति जानासि । शृणु रे, निःशङ्कं शृणु । यः खलु भोजेन्द्रस्य द्वितीयात्मा तस्य महामल्लस्य ।

३ सत्यं सत्यम् । त्वं वनमध्य आत्मानं द्वितीयं राजानं जानासि । स एव राजकुलगामी गोष्ठनाथ आत्मनो ललाटं ताडिष्यति ।

---

व्यञ्जिका ॥ **पेच्छध इति** । भुजङ्गत्वं कामुकत्वम् । **द्वादशमार्गं गमित इति** । स्त्रीजातिभाषेयं 'बारहवाढे द्वारिओ' इत्यपभ्रंशे ख्याता ॥ **सच्चमिति** ।

**कृष्णः**—करालें, तुभ्यं शपे । चन्द्रावलीं विलोक्य साध्वसं गतोऽहमुद्वेगमासादयामि ।

**कराला**—(चन्द्रावलीं विलोक्य । सामर्षम् ।) हा णिउञ्जोज्जाअरिणि, आकोमारसिक्खिदकण्हाहिसारकोसले, संरम्भोन्नद्धगोविआसहस्सोच्छिट्ठाहरबिम्बतिण्हामेत्तविद्धंसिदकुलव्वदे, चिट्ठ चिट्ठ । किं दाणिं भाएसि ।

**ललिता**—अज्जे, को क्खु दोसो जीअणणाहाणुगदाए पच्छिमदिसाए । को वा दोसावहारिणो सूरस्स । किंतु एदाणं आरूढरा-

---

१ हा निकुञ्जोज्जागरिणि, आकौमारशिक्षितकृष्णाभिसारकौशले, संरम्भोन्नद्धगोपिकासहस्रोच्छिष्टाधरबिम्बतृष्णामात्रविध्वंसितकुलव्रते, तिष्ठ तिष्ठ । किमिदानीं बिभेषि ।

२ आर्ये, कः खलु दोषो जीवननाथानुगतायाः पश्चिमदिशः । को वा दोषापहारिणः सूर्यस्य । किंत्वेतयोरारूढरागयोर्द्वयो रागमुत्पाद्य संगमकारिण्याः संध्याकुट्टिन्या एव प्रदोषानुबन्धिता ।

---

अयं भावः—राजसभायां तव दुर्वृत्ते ज्ञापिते सति राजदण्डभयात् क्वापि वनमध्ये लीनं त्वामप्राप्य राजपदान्तिके तव पितैव नन्दो राजसंनिधिं नीयमानस्तत्रैतादृशो दुर्वृत्तः पुत्रो मे जात इति लज्जया दुःखेन च मग्नो भविष्यतीति ॥ **कराले इति** । साध्वसं भयम्, पक्षे साधु असङ्गतः अप्राप्तसङ्गः सन् । उद्वेगं दुःखम् ॥ **अज्जे इति** । जीवननाथो जलाधिपो वरुणः, व्यपदेशेन चन्द्रावल्या विशेषणं जीवननाथः स्वपतिर्मल्लः । वस्तुतस्तत्रापि सरस्वतीभाषिते जीवननाथः कृष्णः । को वा दोषापहारिणः सूर्यस्य दोष इत्यनुषङ्गः । दोषा रात्रिस्तन्नाशकस्य, पक्षे दोषाणामपहारिणः, किंवा दोषायां रात्रावपहारिणः स्त्रीचौरस्य शूरस्य कृष्णस्य । दोषाभावे हेतुगर्भविशेषणमेतत् । श्लेषेण सूर्यपक्षे कृष्णपक्षेऽपि । रागं रक्तिमानं प्रदोषो रजनीमुखं तदनुबन्धिता । पक्षे रागमासक्तिम् । पश्चिमदिक्सूर्यस्थानीययोरसंभावित-

आणं दोणं राअं उप्पादिअ संगमकारिणीए संझाकुट्टिणीए चेअ पदोसाणुबन्धिदा।

**कराला**—[1]जादे, सच्चं कधेसि। (इति प्रौढमाटोपं नाटयन्ती।) हञ्जे पउमिए, परघरविरहिणि, कुट्टिणीकम्मलम्पडे, घण्टीमण्डलचक्कवट्टिणि, मह हत्थादो कहं मुक्किस्ससि। (इति यष्टिमुद्यच्छति।)

**पद्मा**—(परावृत्य।) [2]अज्जे, ण जाणे कीस खिज्जसि। अम्हेहिं तुज्झ सासणं चेअ किज्जन्तं अत्थि।

**वृन्दा**—(स्वगतम्।) नूनं धूर्तया शब्दच्छलमालम्बितं पद्मया। (प्रकाशम्।) आर्ये, शैलभल्लयोर्नामाद्वैतेन भ्रान्तेयं मुग्धा बाला। तदद्य क्षम्यताम्।

(कराला यष्टिं विमुञ्चति।)

**पद्मा**—(स्वगतम्।) [3]ललिदे, चिट्ठ चिट्ठ। तुह णिक्किदं कादुं एसा जडिलं गच्छन्ती म्हि। (इति निष्क्रान्ता।)

**कराला**—(चन्द्रावलीमालोक्य।) [4]एहि भो कुडुङ्गकुडुङ्गिणि, एहि। (इति चन्द्रावलीमादाय शैव्यया सह निष्क्रान्ता।)

---

१ जाते, सत्यं कथयसि। हञ्जे पद्मिके, परगृहविघ्नके कुट्टिनीकर्मलम्पटे, घण्टीमण्डलचक्रवर्तिनि, मम हस्ततः कथं मोक्ष्यसि।

२ आर्ये, न जाने कस्मात्खिद्यसे। अस्माभिर्युष्मच्छासनमेव क्रियमाणमस्ति।

३ ललिते, तिष्ठ तिष्ठ। तव निष्कृतं कर्तुमेषा जटिलां गच्छन्त्यस्मि।

४ एहि भो कुटुम्बकुटुम्बिनि, एहि।

---

सङ्गयोरपि चन्द्रावलीकृष्णयोः सङ्गकारयित्र्याः संध्यास्थानीयपद्मायाः इव प्रकृष्टदोषानुबन्धित्वमित्यर्थः। तेन पद्मा दृढं तर्ज्यतामिति भावः॥ **जाते इति।** जाते हे पुत्रि। हञ्जे हे चेटिके। कुट्टिनीकर्म परपुरुषदूत्यं तत्र लम्पटे। 'णिज्जड

**कृष्णः**—(सोच्छ्वासम्।) वृन्दे, नूनं साधितार्थासि।

**वृन्दा**—माधव, रूपिणी माधवलक्ष्मीर्गौरीतीर्थे खेलति। तया चोपढौकितं सर्वस्वमिदं दरोन्मुद्रितं गन्धफलीद्वन्द्वम्।

**कृष्णः**—(सानन्दमादाय।) वृन्दे, यावद्गवां चारणे वयस्यानवधार्य तत्रानुसरामि, तावद्भवतीभ्यामग्रतः प्रस्थीयताम्। (इति निष्क्रान्तः।)

**वृन्दा**—(परिक्रम्य।) ललिते, पुरः संभावय कदम्बसम्राजम्। (इत्युपेत्य।) हन्त हन्त।

शङ्के पङ्कजसंभवोऽपि भवतः सौभाग्यभङ्गीभरं
वक्तुं न क्षमते कदम्बनृपते वृन्दाटवीद्योतिनः।
पुष्पैर्यस्य रमासहोदरतयाप्युद्भासुरं कौस्तुभं
दुर्लीलैरवहेलयद्भिरभितः शौरेरुरश्छाद्यते॥ ३०॥

**ललिता**—(पुरो विलोक्य।) वुन्दे, इअं विसाहादुदिआ भअवदी माअन्दकुञ्जे पच्छन्नं चिट्ठदि।

**वृन्दा**—(लवङ्गलतान्तिके राधां विलोक्य।) ललिते, पश्य पश्य।

किमितः सुषमा वपुष्मती किमभिव्यक्तिरलं गुणश्रियः।
अथवा प्रणयाभिसंपदः किमियं मूर्तिरुदेति राधिका॥ ३१॥

---

१ वृन्दे, इयं विशाखाद्वितीया भगवती माकन्दकुञ्जे प्रच्छन्नं तिष्ठति।

---

गोवद्धणस्स पासम्मि' इति त्वया पूर्वमादिष्टादिति भावः॥ **माधवेति**। हे माधव, रूपिणी रूपवती वसन्तशोभा। माधवस्य तव लक्ष्मीः शोभारूपा संपत्तिरूपा वा राधा इति च। गन्धफलीद्वन्द्वं चम्पकयुगलम्॥ **शङ्के इति**। यस्य तव पुष्पैः। कीदृशैः। कौस्तुभमवहेलयद्भिः। कीदृशी। रमासहोदरतया। अपिकारात् स्वरूपेण च। उद्भासुरं देदीप्यमानम्। दुर्लीलैरिति तादृशं कौस्तुभं हेलयितुं भीतिर्नास्तीति भावः॥ **वुन्दे इति**। माकन्दकुञ्जे आम्रकुञ्जे॥ **कर्णेति**। कमलां लक्ष्मीम्॥

(पुनर्निरूप्य[1] ।)

कर्णालंकृतकमला कुन्तलवेणीशिखाचलत्कमला ।
करकमलाश्रितकमला विडम्बयत्यलमसौ कमलाम् ॥ ३२ ॥

(नेपथ्ये ।)

कर्णान्दोलितमुग्धपुष्पकलिकाद्वन्द्वः कदम्बस्रजा
संवीतो मुरलीकरम्बितकरश्चूडाञ्चले चन्द्रिका ।
दूरादेष मनःशिलातिलकिना भालेन बिभ्रद्द्युतिं
मूर्तः खेलति हन्त नन्दगृहिणीवात्सल्यलक्ष्मीरसः ॥ ३३ ॥

ललिता—[1]णूणं भअवदीए दूरे दिट्ठो कण्हो, जं वण्णीअदि ।

वृन्दा—ललिते, सत्यमविदूरवर्ती मधुवैरी । तथा हि ।

सखि कुण्डलीकृतशिखण्डमण्डलो
नटतीह ताण्डविकहूतिरण्डजः ।
न कदापि कृष्णमुदिरेक्षणं विना
मुदिरेक्षणे क्षणमपि श्वसित्यसौ ॥ ३४ ॥

ललिता—[2]सहि, दक्खिणेण पुंणाअसण्डं पेक्ख पुण्डअमण्डपे णम् ।

---

१ नूनं भगवत्या दूरे दृष्टः कृष्णः, यद्वर्ण्यते ।
२ सखि, दक्षिणेन पुंनागषण्ढं पश्य पुण्ड्रकमण्डप एनम् ।

---

**कर्णेति** । नन्दगृहिणीवात्सल्य इत्यनेन व्रजेश्वर्या लालनेनैव कृष्णस्य परमसौन्दर्यमिदं जातम् । अहो तस्या भाग्यपरिपाक इति भावः ॥ **सखीति** । ताण्डविक इति नाम्ना हूतिराह्वानं यस्य । अण्डजः पक्षी मयूरः । कृष्ण एव मुदिरो मेघस्तस्येक्षणम् । हे मुदिरेक्षणे । मुदिरः खञ्जनः । क्षणमपि न श्वसिति प्राणिति ॥

---

1. 'निर्वर्ण्य' इति मूलपुस्तकपाठः.

वृन्दा—(विलोक्य । सहर्षम् ।)

चक्रं वशीकृतवतः किल नैचिकीनां
वंशीनिनादमधुना मधुसूदनस्य ।
आभीरशेखरगतिं प्रतिपादयन्ती
शोभा बभूव परमा परमस्य यष्टिः ॥ ३५ ॥

ललिता—णं वुत्तं दाणिं पि दोणं अण्णोण्णदंसणम् । केअलं रङ्गिणिअं पेक्खिअ लअङ्गकुडङ्गं पविसदि कण्हो ।

वृन्दा—पश्य पश्य ।

विस्मरान्परितो हरिमूर्तितः परिमलानुपलभ्य कलावती ।
इयमितः सखि पुण्ड्रकमण्डपे सितमुखी तनुवल्लिमपावृणोत् ॥ ३६ ॥

(पुनर्निरूप्य । सकौतुकम् ।)

व्यक्तिं गताभिरभितो भुवि पांसुलायां
सद्यः पदाङ्कततिभिः कथिताध्वनोऽयम् ।
पश्चादुपेत्य नयने किल राधिकायाः
कम्प्रेण पाणियुगलेन हरिर्दधार ॥ ३७ ॥

ललिता—हन्त हन्त, एसा पुलइदङ्गी वामा लीलाकमलेण ताडेदि कमलेक्खणम् ।

---

१ न वृत्तमिदानीमपि द्वयोरन्योन्यदर्शनम् । केवलं रङ्गिणिकां प्रेक्ष्य लवङ्गकुञ्जं प्रविशति कृष्णः ।

२ हन्त हन्त, एषा पुलकिताङ्गी वामा लीलाकमलेन ताडयति कमलेक्षणम् ।

---

**सहीति** । पुण्ड्रकमण्डपे माधवीलतामण्डपे ॥ **व्यक्तिमिति** । राधिकायाः पश्चादुपेत्य हरिः पाणियुगलेन नयने दधार । कथंभूताया राधायाः । पदाङ्कततिभिः पदचिह्नसमूहैः कथिताध्वनोऽयं कथितोऽध्वा वर्त्म यस्याः । कीदृशीभिः । पांसुलायां भुवि अभितो व्यक्तिं गताभिः ॥ **हन्तेति** । पुलकिताङ्गी वामा श्रीराधा ॥

वृन्दा—पश्य पश्य ।

भ्रूभेदः स्मितसंवृतो नहि नहीत्युक्तिर्मदेनाकुला
विश्रान्तोद्धति पाणिरोधरचनं शुष्कं तथा क्रन्दनम् ।
सृष्टो यः सखि राधया मुहुरयं संगोपनोपक्रमो
भावस्तेन हृदि स्थितो मुरभिदि व्यक्तः समन्तादभूत् ॥ ३८ ॥

ललिता—(संस्कृतेन ।)

प्रातिकूल्यमिव यद्विवृण्वती राधिका रदनखार्पणोद्धुरा ।
केलिकर्मणि गता प्रगल्भतां तेन तुष्टिमतुलां हरिर्ययौ ॥ ३९ ॥

वृन्दा—(विहस्य ।)

नैरञ्जन्यमुपेयतुः परिगलन्मोदाश्रुणी लोचने
स्वेदोद्भूतविलेपनं किल कुचद्वन्द्वं जहौ रागिताम् ।
योगौत्सुक्यमगादुरः स्फुरदिति प्रेक्ष्योदयं सङ्गिनां
राधे नीविरियं तव श्लथगुणा शङ्के मुमुक्षां दधे ॥ ४० ॥

ललिता—कैधं एदं विअड्ढमिहुणं माहवीकुडङ्गन्तरिदं संवुत्तम् ।

---

१ कथमिदं विदग्धमिथुनं माधवीकुञ्जान्तरितं संवृत्तम् ।

---

भ्रूभेद इति । संगोपनस्योपक्रमो यः सृष्टस्तेनैव प्रत्युत भावोऽव्यक्तोऽभूत् । भ्रूभेदः भ्रुवोर्वक्रिमा असंमतिव्यञ्जकः । कीदृशः । स्मितसंवृतः स्मितमेव तत्र परमसंमतिव्यञ्जकम् । नहि नहीत्युक्तिर्निषेधकरणम् । मदेनाकुलेति तत्र सात्विकविकारः स्वरभेद एव परमावधिव्यञ्जकः । पाणिरोधरचनमनभीष्टमेतदिति व्यञ्जकम् । कीदृशम् । विश्रान्तोद्धति विश्रान्ता उद्धतिरौद्धत्यं यत्र । तत्करस्पर्शेन जातस्तम्भयोर्हस्तयोरौद्धत्ये शक्त्यभावात् । तेनौद्धत्यविश्रान्तिरेव परमाभीष्टव्यञ्जिका । क्रन्दनं दुःखव्यञ्जकं शुष्कत्वमेव दुःखाभावव्यञ्जकमिति ॥ नैरञ्जन्यमिति । नैरञ्जन्यं व्यक्तत्वं कज्जलरागशून्यत्वं च लोचने परिगलन्मोदाश्रुणी सती

वृन्दा—

राधामाधवयोर्मेध्यां केलिमाध्वीकमाधुरीम् ।
धयन्नयनभृङ्गेन कस्तृप्तिमधिगच्छति ॥ ४१ ॥

ललिता—हला, एदे गलन्तमरन्दंपि माहवीपुप्फसंदोहं मुक्किअ कीसं भिङ्गा पुव्वाहिमुहं धाअन्ति ।

वृन्दा—सखि, विमुच्य माधवीमण्डपं नागरमण्डलोत्तंसौ प्रस्थितौ । तयोरामोदमनुसर्पन्तः षट्पदा धावन्ति । तदेहि । लतामन्दिरालोकनेन नन्दयावश्चक्षुषी । (इति परिक्रम्य ।) ललिते, पश्य पश्य ।

मनोहारी हारस्खलितमणिभिस्तारतरलैः
परिम्लायन्माल्यो मिलितपुरटालंकृतिकणः ।
अयं कुञ्जस्तल्पीकृतकुसुमपुञ्जप्रणयवा-
न्समन्तादुत्तुङ्गं पिशुनयति रङ्गं मुरभिदः ॥ ४२ ॥

ललिता—(निपुणं निरूप्य । संस्कृतेन ।)

कृष्णाङ्गसंगममिलद्घुसृणाङ्गरागा
राधापदस्खलदलक्तकरक्तपार्श्वा ।

---

१ सखि, एते गलन्तमरन्दमपि माधवीपुष्पसंदोहं मुक्त्वा कस्माद्भृङ्गाः पूर्वाभिमुखं धावन्ति ।

---

नैरञ्जन्यमुपेयतुरित्यन्वयः । एवं सर्वत्र । रागितां विषयासक्तिं कुङ्कुमादिरागं च । योगे पक्षे संगमे औत्सुक्यम् । मुमुक्षां पक्षे ग्रन्थिच्युतीच्छाम् । **राधेति** । मेध्यां कामदोषराहित्येन 'प्रेमैव गोपरामाणां काम इत्यगमत्प्रथाम्' इत्युक्तरीत्या परमपवित्राम् । धयन्नास्वादयन् ॥ **मनोहारीति** । हारात् स्खलिता ये मणयस्तैर्मनोहारी । तारो मुक्ता एव तरलहारमध्यगो येषु तैः । पिशुनयति सूचयति ॥ **कृष्णाङ्गेति** । घुसृणं कुङ्कुमम् ॥ **चिक्रीडेति** । या रजसि चिक्रीड क्रीडित-

सिन्दूरबिन्दुचितघर्मजलोक्षितेयं
दूना धिनोति नयने मम पुष्पशय्या ॥ ४३ ॥

**वृन्दा**—(सविस्मयम्।)

चिक्रीड या रजसि रञ्जितसूत्रबद्ध-
गोकर्णमात्रचिकुरा नवविद्धकर्णा।
सेयं कुतः प्रवरविभ्रमकौशलानि
राधाध्यगीष्ट बत वैरजितं जिगाय ॥ ४४ ॥

**ललिता**—(पूर्वतः प्रेक्ष्य।) वुन्दे, पेक्ख णादिदूरे सराहो माहवो।

**वृन्दा**—शृणुवः किमाह।

(नेपथ्ये।)

**राधा**—(संस्कृतेन।)

कुरु कुवलयं कर्णोत्सङ्गे लवङ्गमभङ्गुरं
विकिर चिकुरस्यान्तर्मल्लीस्रजं क्षिप वक्षसि।
अनघ जघने कादम्बीं मे प्रलम्बय मेखलां
कलयतु न मामालीवृन्दं हरे निरलंकृतिम् ॥ ४५ ॥

**वृन्दा**—(स्मितं कृत्वा।)

वहन्ती मञ्जिष्ठारुणिततनुसूत्रोज्ज्वलरुची-
न्नखाङ्कान्खेलोर्मिस्खलितशिखिपक्षावलिरियम्।

---

१ वृन्दे, पश्य नातिदूरे सराधो माधवः।

---

वती। रञ्जितेन सूत्रेण बद्धा गोकर्णमात्रा गोकर्णपरिमिताश्चिकुरा यस्याः। अङ्गुष्ठानामिकाविस्तारेण गोकर्णो भवति। तथा शुभममरेण—'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते' इति। नवविद्धौ कर्णौ यस्याः। कुतोऽध्यगीष्ट कस्माद्गुरोः सकाशादधीतवती। बत विस्मये। इदानीमेव बालिका आसीत्, इदानीमेव प्रवरतरुण्यभूदिति भावः॥ **कुर्विति**। कादम्बीं कदम्बपुष्परचिताम्॥ **वहन्तीति**। मञ्जिष्ठयारुणितेभ्यस्तनुसूत्रेभ्यः सूक्ष्मसूत्रेभ्योऽप्युज्ज्वला रुचिः कान्तिर्येषां तान्

---

१. 'पुरतः' इति मूलपुस्तकपाठः.

स्फुरन्मुक्तातुल्यैरलघुघनघर्माम्बुभिरलं
समृद्धा मे मेधां मधुमथनमूर्तिर्मदयति ॥ ४६ ॥

(ततः प्रविशति कृष्णः, प्रसाधिताङ्गी राधा च ।)

**कृष्णः**—

नीतं ते पुनरुक्ततां भ्रमरकैः कस्तूरिकापत्रकं
नेत्राभ्यां विफलीकृतं कुवलयद्वन्द्वं च कर्णार्पितम् ।
हारश्च सितकान्तिभङ्गिभिरलं पिष्टानुपेषीकृतः
किं राधे तव मण्डनेन नितरामङ्गैरसि द्योतिता ॥ ४७ ॥

**उभे**—(उपसृत्य ।) सुन्दर, इदं परममञ्जुलं वासन्तीकुसुममण्डनम् ।

**कृष्णः**—(स्तबकद्वन्द्वमादाय । सहर्षम् ।)

ध्येयेन मुक्तवृन्दस्य काम्यमाना मुहुर्मया ।
युक्ता त्वमतिमुक्तानां श्रेण्या सुश्रोणि सेवितुम् ॥ ४८ ॥

(इति राधामवतंसयति ।)

(नेपथ्ये ।)

अनुपरमति यामे काममह्नस्तृतीये
जलदसमयलक्ष्मीयौवनोज्जृम्भणेऽद्य ।
नवयवसकदम्बैस्तर्पितानां कदम्बः
कलयति सुरभीणां गोकुलायाभिमुख्यम् ॥ ४९ ॥

---

नखाङ्कान् ॥ **नीतमिति** । भ्रमरकैर्ललाटालम्बितालकैः । 'ते ललाटे भ्रमरकाः' इत्यमरः ॥ **ध्येयेनेति** । अतिमुक्तानामतिशयमुक्तानां माधवीपुष्पाणां च । 'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलता' इत्यमरः ॥ **अनुपरमतीति** । अद्य सुरभीणां कदम्बः समूहः अह्नस्तृतीये यामे प्रहरे अनुपरमत्यसमाप्ते सति गोकुलाय गोकुलं प्रवेष्टुमाभिमुख्यं कलयति करोतीत्यन्वयः । अद्य किंभूते । जलदसमयलक्ष्म्या वर्षाकालशोभाया यौवनस्य विस्तारस्योज्जृम्भणं प्रकाशो

ललिता—राहे, अणुजाणेहि। रत्तिमण्डनत्थं दुल्लहं वसन्तकुसुमं गेह्लिस्सम्। (इति निष्क्रान्ता।)

कृष्णः—(स्मित्वा। जनान्तिकम्।) वृन्दे, किंचिद्विनोदं विधातुंकामोऽस्मि। तदत्र प्रियायाः प्रत्यायितेयं पुरो द्रुमाधिरूढा कक्खटी त्वया मत्पक्षग्राहिणी क्रियताम्।

वृन्दा—भवतु। यतिष्ये।

कृष्णः—(राधामवेक्ष्य।) प्रिये चन्द्रा—(इत्यर्धोक्ते कृत्रिमसंभ्रमं नाटयति।)

राधिका—(सखेदम्।) हद्धी हद्धी। कधं एवं सुणन्तं वि ण मे फुडिदं कण्णजुअलम्।

वृन्दा—(स्वगतम्।) पिच्छिकाभ्रमणेन कक्खटिकामुन्मोद्य हरेरभीष्टं व्याहारयिष्ये। (इत्यलक्षितं तथा कृत्वा प्रकाशम्।) सखि, रङ्गे मा भज वैमुख्यम्।

कृष्णः—प्रिये चन्द्रानने, किमित्यकाण्डे विमनस्कासि।

(नेपथ्ये।)

सामिणि, इमिणा तुज्झ मुद्धत्तणेण ललिदा ण जीविस्सदि।

---

१ राधे, अनुज्ञापय। रात्रिमण्डनार्थं दुर्लभं वसन्तकुसुमं गृहीष्यामि।
२ हा धिक् हा धिक्। कथमेवं शृण्वदपि न मे स्फुटितं कर्णयुगलम्।
३ स्वामिनि, अनेन तव मुग्धत्वेन ललिता न जीविष्यति।

---

यत्र तथाभूते॥ वृन्दे इति। प्रत्यायिता प्रतीकारिणी। मत्पक्षग्राहिणी मत्कार्यसहाया॥ प्रिये इति। कृत्रिमसंभ्रमेण हे प्रिये चन्द्रावलि इति गोत्रस्खलनं

**राधिका**—(ऊर्ध्वमालोक्य । स्वगतम् ।) [1]णीसंदेहम्हि किदा कक्ख-डिआए । (प्रकाशम् ।) पअण्डं क्खु कुलिसविप्फूज्जिदं कधं डिण्डिमा-डम्बरेण संवरणिज्जं होदु । (इति पराङ्मुखी भवति ।)

**कृष्णः**—(अपवार्य ।)

समरोद्धुरकामकार्मुकश्रीविजयिभ्रूयुगमाकुलाक्षिपद्मम् ।
विधुरीकृतमप्यतिक्रुधाभ्रे मम राधावदनं मनो धिनोति ॥ ५० ॥

(इति राधापटाञ्चलमुच्चाल्य ।) सुन्दरि, मधुरेण समाप्यतां मधुविहारकौ-तुकम् ।

(पुनर्नेपथ्ये ।)

[2]हद्धी हद्धी । भो पउमासिक्खे दुट्ठसारसि, तुमं पि मं कडक्खसि । ता कीस पराणं धारेमि ।

**राधिका**—(निशम्य सरोषमपसर्पन्ती ।) [3]वुन्दे, परं केत्तिअं विड-म्बिदम्हि । ता झत्ति वारेहि णं कवडपरिपाडीणाटअसुत्तधारं भुअण-माराररम्भिमुरलीशिक्खाणीसङ्कं करालिआणत्तिणीकीलाकुरङ्गम् ।

---

१ निःसंदेहास्मि कृता कक्खटिकया । प्रचण्डं खलु कुलिशविस्फूर्जितं कथं डिण्डिमाडम्बरेण संवरणीयं भवतु ।

२ हा धिक् हा धिक् । भो पद्माशिष्ये दुष्टसारसि, त्वमपि मां कटाक्ष-यसि । तत्कस्मात्प्राणं धारयामि ।

३ वृन्दे, परं कियद्विडम्बितास्मि । तज्झटिति वारयैनं कपटपरिपाटीना-टकसूत्रधारं भुवनमारारम्भिमुरलीशिक्षानिःशङ्कं करालिकानप्तृकीडाकुरङ्गम् ।

---

ज्ञापयति ॥ **सखीति** । रङ्गे सुखसमये ॥ **णीसंदेह इति** । प्रचण्डं खलु कुलिशविस्फूर्जितम् । 'चन्द्रा—' इत्यर्धसंबोधनध्वनिः । डिण्डिमाडम्बरेण चन्द्रानने इति परिष्कृतसंबोधनध्वनिना । संवरणीयं संगोपनीयम् ॥ **समरेति** । कीदृशं राधावदनम् । समरोद्धुरस्य युद्धप्रचण्डस्य कामस्य कार्मुकश्रियो धनुःशोभाया अपि विजयिनो भ्रुवोर्युगलं यत्र ॥ भो पद्माशिष्ये, इत्यादि कक्खटिकावचनेन चन्द्रावलीपरिवाराणां निभृतस्थितिं ज्ञापयति ॥ **वुन्दे इति** । भुवनानां मारा-

**कृष्णः**—(सानन्दस्मितम्।) सखि वृन्दे, प्रसादय राधाम्।

**वृन्दा**—प्रियसखि राधे, विदग्धवधूनां मूर्धन्यासि। तदकाण्डे कठोरमानकाण्डेन नापसारय वल्लभकृष्णसारम्।

**राधिका**—(बाढमवज्ञामभिनीय।) [1]एत्थ अवत्थादुं ण जुत्तम्हि। (इति निष्क्रान्ता।)

**कृष्णः**—वृन्दे, बलीयसि रोषानले साममाध्वीकमुद्दीपनायैव। तदलमत्रानुयात्रया।

**वृन्दा**—किमत्र युक्तम्।

**कृष्णः**—वृन्दे, वरवर्णिनीवेषेण राधां प्रसाधयितुमिच्छामि। तदत्र भवत्या समाधानमध्यवसीयताम्।

(वृन्दा साङ्गीकारं स्मितं करोति।)

**कृष्णः**—सखि, गौराङ्गरागसंगतं वराङ्गनावेषसाधनं कथमत्राभिलप्स्ये।

(प्रविश्य।)

**मधुमङ्गलः**—[2]पिअवअस्स, अत्थि गौरी घरे तहाविहवेससामग्गी जा पउमाए मम हत्थे समप्पिदा।

**कृष्णः**—(सहर्षम्।) वृन्दे, गौरीगृहगम्भीरिकायां भविष्यामि। तदात्मभगिनीभावेन संभावनीयोऽहम्। (इति सवयस्यो निष्क्रान्तः।)

---

१ अत्रावस्थातुं न युक्तास्मि।

२ प्रियवयस्य, अस्ति गौरीगृहे तथाविधवेषसामग्री या पद्मया मम हस्ते समर्पिता।

---

रम्भवल्लै कन्दर्पारम्भकारिण्यै वा मुरल्यै या शिक्षा मारय चतुर्दशभुवनस्थजन्तूनिति या शिक्षा तया निःशङ्कं पापादिभयरहितम्। मुरलीनादेन भ्रंशिताश्चेद्वयं न भवेम तदा कथमस्य वशे स्याम इति भावः। अथ च करालिकानप्त्रीकीडाकुर-

**वृन्दा**—(परिक्रम्य । दूरे दृष्टिं क्षिपन्ती ।)

चम्पकलवङ्गबकुलान्यवचिन्वन्त्योर्वयस्ययोरत्र ।
स्फुटमिदमेव सलज्जं राधावृत्तं निवेदयति ॥ ५१ ॥

(प्रविश्य तथाविधा राधा ।)

**राधा**—[1]सहि, तदो हं अणुणेदुं पउत्तं णं अवहीरिअ एत्थ पत्तम्हि ।

**ललिता**—[2]राहे, ण क्खु तुमम्हि कण्हस्स गोत्तक्खलिदं सिविणे वि संभावीअदि । ता पइदिपमत्ताणं पसूणं पलावे किदवीसम्भा तुमं वञ्चिदासि ।

**विशाखा**—[3]हद्धी हद्धी । ललिदे, पेक्ख अज्ज सोहग्गपुण्णिमाए आरद्धसंघरिसा बलिणो पडिपक्खा । ता विडम्बिदा म्ह देव्वेण ।

**ललिता**—[4]विसाहे, सच्चं कहेसि । एत्थ महूसवे जइ अम्हाणं मुहमालिण्णं सवत्तीओ पेक्खिस्सन्ति, तदो सोल्लुण्ठं कडुक्खन्तीओ हसिस्सन्ति ।

---

१ सखि, ततोऽहमनुनेतुं प्रवृत्तमेनमवधीर्यात्र प्राप्तास्मि ।

२ राधे, न खलु त्वयि कृष्णस्य गोत्रस्खलितं स्वप्नेऽपि संभाव्यते । तत्प्रकृतिप्रमत्तानां पशूनां प्रलापे कृतविस्रम्भा त्वं वञ्चितासि ।

३ हा धिक् हा धिक् । ललिते, पश्याद्य सौभाग्यपूर्णिमायामारब्धसंघर्षा बलिनः प्रतिपक्षाः । तस्माद्विडम्बिताः स्म दैवेन ।

४ विशाखे, सत्यं कथयसि । अत्र महोत्सवे यद्यस्माकं मुखमालिन्यं सपत्न्यः प्रेक्षिष्यन्ति, तदा सोल्लुण्ठं कटाक्षयन्त्यो हसिष्यन्ति ।

---

ङ्गम् । वशवर्ती नर्तकवानरो लोके क्रीडाकुरङ्ग उच्यते ॥ **सहीति** । अवधीर्य अवज्ञाय ॥ **हद्धीति** । संघर्षः संघर्षणम् । अनिष्टमिति यावत् ॥ **असूयेति** ।

राधिका—(स्वगतम्।) साहु सहीओ मन्तेन्ति। ता किं एत्थ सरणम्।

वृन्दा—(उपसृत्य।) ललिते, रामानुजस्य निदेशेन राममुपनेतुं प्रस्थितास्मि।

ललिता—किंति।

वृन्दा—वसन्तश्रीदर्शनाय।

विशाखा—सहि वुन्दे, क्खणं विलम्बिअ कुण संधिम्।

वृन्दा—सत्यं जानीहि मया दुष्करोऽद्य संधिः।

विशाखा—कधं विअ।

वृन्दा—पृच्छतामात्मसखी, ययाद्य कटूक्तिभिरपरञ्जितः कञ्जेक्षणः।

राधिका—(निःश्वस्य।) हला वुन्दे, तुमं चेअ गदी।

वृन्दा—(सव्याजरोषम्।)

असूया चण्डाली हृदि पदमिता चण्डि विविशु-
र्न वाचस्ते पथ्याः श्रुतिसरणिसीमाञ्चलमपि।
इदानीमौदास्यं वशगमदिराक्षीततिरगा-
न्मुकुन्दो निर्द्वन्द्वीभव सखि मुधा निःश्वसिसि किम्॥ ५२॥

---

१ साधु सख्यो मन्त्रयन्ति। तत्किमत्र शरणम्।
२ किमिति।
३ सखि वृन्दे, क्षणं विलम्ब्य कुरु संधिम्।
४ कथमिव।
५ हला वृन्दे, त्वमेव गतिः।

---

हृदि पदं स्थानं इता प्राप्ता अत एव पथ्या वाचो न विविशुः। वशगा मदिराक्षीणां ततिर्यस्य॥ हन्तेति। स्वसारं भगिनीम्। वस्तुतस्तु स्वस्य मम सारं कृष्णम्॥

ललिता—[1]कहिं सो क्खु मोहणो ।

वृन्दा—गौरीसद्मनि ।

ललिता—[2]किं करेदि ।

वृन्दा—निकुञ्जविद्यया सार्धं गोष्ठीं तनोति ।

तिस्रः—[3]सहि, का क्खु णिउञ्जविज्जा ।

वृन्दा—(स्फुटं विहस्य ।) अहो मौग्ध्यं किशोरीणां यदमूरतिप्रसिद्धामपि निकुञ्जविद्यां न विदन्ति ।

तिस्रः—(सलज्जम् ।) [4]सहि, कधेहि सच्चं । ण जाणीम्ह ।

वृन्दा—हन्त भो विशुद्धाः, का नाम सा गोकुले बल्लवबालिकास्ति या खलु स्वसारं मे भाण्डीरदेवतां न जानीते ।

ललिता—[5]वुन्दे, देहि तुमं मन्तं जेण एदं वेसम्मं सुहोदक्कं भवे ।

वृन्दा—सखि, गोकुलानन्दनिगूढविस्रम्भमणिमञ्जूषेयं निकुञ्जविद्या । तदेनां भजेम ।

(इति सर्वाः परिक्रामन्ति ।)

---

१ कुत्र स खलु मोहनः ।

२ किं करोति ।

३ सखि, का खलु निकुञ्जविद्या ।

४ सखि, कथय सत्यम् । न जानीमः ।

५ वृन्दे, देहि त्वं मन्त्रं येनेदं वैषम्यं सुखोदर्कं भवेत् ।

---

संज्ञयेति । संज्ञया संकेताह्वानेन ॥ परावृत्य पुत्रमानयिष्यामीति । कृष्ण-

**राधिका**—¹वुन्दे, एदं चेअ गौरीमण्डवम् । ता एत्थ पविसिअ सण्णाए कड्ढ णिउञ्जविज्जम् ।

**वृन्दा**—(कुतोद्वीविकमालोक्य स्वगतम् ।) हन्त, गौरीमिव किशोरीं द्वारि पश्यामि । (प्रकाशम् ।) सख्यः केवलमेकात्र भाण्डीरदेवतैव शिखण्डेन कुण्डलं कुर्वती वर्तते ।

**तिस्रः**—²अंसचसंसिणि, चिट्ठ चिट्ठ । जं एसो ताण्डविअसिहण्डी पङ्गणे चिट्ठदि ।

**वृन्दा**—हन्त भो दाक्षिण्यशून्याः, स्वयमागत्य समीक्ष्यताम् । किमत्रानुमानेन ।

**ललिता**—³हैला, फुडं तन्दाउलदा चन्दइणो जादा जं णिक्कमन्तो चन्दअमउली इमिणा ण लक्खिदो ।

**राधिका**—⁴हैला, घरं पविसिअ णिउञ्जविज्जं पूछम्ह ।

(इति सर्वाः प्रवेशं नाटयन्ति ।)

(प्रविश्य ।)

**जटिला**—⁵भैणिदम्हि पेम्मेण पउमाए—'अज्जे जडिले, दिट्ठिआ वड्ढसि । गोअद्धणो विअ तुम्ह पुत्तो वि गोकोडीसरो हुविस्सदि । जं दिट्ठं मए अज्ज गौरीतित्थे राहिए गौरी आराहीअदि'ति । ता

१ वृन्दे, इदमेव गौरीमण्डपम् । तदत्र प्रविश्य संज्ञयाकर्ष निकुञ्जविद्याम् ।

२ असत्यशंसिनि, तिष्ठ तिष्ठ । यदेषस्ताण्डविकशिखण्डी प्राङ्गणे तिष्ठति ।

३ हला, स्फुटं तन्द्राकुलता चन्द्रकिणी जाता यन्निष्क्रमन् चन्द्रकमौलिरनेन न लक्षितः ।

४ हला, गृहं प्रविश्य निकुञ्जविद्यां पृच्छामः ।

५ भणितास्मि प्रेम्णा पद्मया—'आर्ये जटिले, दिष्ट्या वर्धसे । गोवर्धन इव तव पुत्रोऽपि गोकोटीश्वरो भविष्यति । यद्दृष्टं मयाद्य गौरीतीर्थे राधया गौर्याराध्यते' इति । तद्गत्वा वधूमाशीर्भिर्वर्धयिष्यामि । साधु पद्मे, साधु ।

गदुअ वहूडिहं आसिसाहिं वड्ढयिस्सम् । (इति परिक्रम्य रङ्गणीमङ्गने दृष्ट्वा सानन्दम् ।) साहु पउमे, साहु । असच्चभासिणी णासि । (पुनर्निभाल्य । सखेदम् ।) हद्धी हद्धी । कहं गौरीसिंहस्स सिरे तण्डविओ चिट्ठइ । ता परावट्टिअ पुत्तं आणिस्सम् । (इति धावन्ती निष्क्रान्ता ।)

**राधिका**—(जनान्तिकम् ।) [1]सहीओ, पेक्खध लोओत्तरं किंपि गौरीए सौन्दरम् ।

**सख्यौ**—[2]हला, सच्चं सच्चम् । ठाणे कण्हस्स पेम्मवीसम्हसंभाविदा एसा ।

**राधिका**—[3]णं अदिट्ठपूव्वं संभासिदुं ससंभमम्हि । (इत्यपत्रपां नाटयति ।)

(नेपथ्ये ।)

यामि वृन्दे, नूनं राधया नाहं परिचीये । मया तु सहस्रधेयमनुभूयमानास्ति ।

**वृन्दा**—(स्वगतम् ।) चित्रं साक्षादङ्गनाकण्ठध्वनिरेवायम् ।

**राधिका**—[4]वुन्दे, ण जाणे कीस पसहं णिउञ्जविज्जाए सिणिज्झदि मे हिअअम् ।

---

असत्यभाषिणी नासि । हा धिक् हा धिक् । कथं गौरीसिंहस्य शिरसि ताण्डविकस्तिष्ठति । तत्परावृत्य पुत्रमानयिष्यामि ।

१ सख्यः, पश्यत लोकोत्तरं किमपि गौर्याः सौन्दर्यम् ।

२ हला, सत्यं सत्यम् । स्थाने कृष्णस्य प्रेमविस्रम्भसंभावितैषा ।

३ एनामदृष्टपूर्वां संभाषितुं ससंभ्रमास्मि ।

४ वृन्दे, न जाने कस्मात्प्रसभं निकुञ्जविद्यायां स्निह्यति मे हृदयम् ।

---

संगता वधूं दर्शयितुमिति भावः ॥ **हलेति** । स्थाने युक्तम् । युक्तमेतदित्यर्थः ॥ **यामीति** । यामि हे भगिनि । पक्षे हे कुलनारि । 'यामिस्वसृकुलस्त्रियोः'

वृन्दा—सखि, तत्त्वं जाने । न चित्रमिदं यदसावपि चिरं त्वय्यनुरज्यति ।

राधिका—(सानन्दमनुसृत्य ।) हला णिउञ्जविज्जे, कहिं सो तुह णिउञ्जणाअरो ।

(नेपथ्ये ।)

सखि, कस्तं जनो जानाति ।

ललिता—सहि णिउञ्जविज्जे, मुंचेहि परिहासच्छलम् । अप्पवग्गो दे अम्हारिसो जणो ।

(नेपथ्ये ।)

वाढं तत्त्वमविज्ञाय ताप्यमानः कृशानुना ।
कथं शारदपद्माक्षि पारदः परिलभ्यते ॥ ५३ ॥

वृन्दा—(जनान्तिकम् ।)

स्मेरा कपोलपाली शंसति दूत्यं निकुञ्जविद्यायाः ।
राधे मृदुलय तदिमां स्नेहेनाभ्यज्य भव्येन ॥ ५४ ॥

राधिका—हला णिउञ्जविज्जे, कीस वुन्देव णाणुबन्धणासि सिणेहवन्धम् ।

(नेपथ्ये ।)

विधिः पद्मे पादौ नवकदलिके सक्थियुगलीं
मृणाले दोर्द्वन्द्वं तव शशिनमापाद्य वदनम् ।

---

१ हला निकुञ्जविद्ये, कुत्र स तव निकुञ्जनागरः ।
२ सखि निकुञ्जविद्ये, मुञ्च परिहासच्छलम् । आत्मवर्गस्तेऽस्मादृशो जनः ।
३ हला निकुञ्जविद्ये, कस्माद्वृन्देव नानुबध्नासि स्नेहबन्धम् ।

---

स्मरः ॥ विधिरिति । विधिर्विधाता । हे पद्मे, पादौ आपाद्य सक्थियुगली-

मृदूनामर्थानां न कठिनमवष्टम्भकमृते
स्थितिः स्यादित्यत्र व्यथित हृदयं नूनमशनिम् ॥ ५५ ॥

**राधिका**—[1]वुंन्दे, पेक्ख साणुराअहासं परिहसिज्जामि णिउञ्जविज्जाए । ता गदुअ मिलिस्सम् । (इति निष्क्रान्ता ।)

**वृन्दा**—

गोकुलरामाप्रेयसि निकुञ्जविद्ये कठोरधीस्त्वमसि ।
यत्स्वणामपि पुरतः परिरभ्य सखीं न रञ्जयसि ॥ ५६ ॥

**विशाखा**—[2]इअं राही णिउञ्जविज्जं परिरद्धुं भुअवल्लीं उल्लासेन्ती पेम्मवीसद्धं जप्पदि । हला भण्डीरदेअदे, पेक्ख । गोकुलपवेसवेला पच्चासीअदि । ता कारिज्जउ अम्हेसु लीलारङ्गसंगमिदो कण्हस्स पसाओ ।

**ललिता**—[3]वुंन्दे, एसा तुज्झ बहिणी राहिअं परिरम्भिअ चुम्बदि ।

**विशाखा**—(सशङ्कम् ।) [4]दिट्ठा णिल्लज्जिआए तुज्झ णिउञ्जविज्जाए पुरिसधम्मलुद्धदा । जं एसा राहावक्खोरुहे णहरङ्कुरं अप्पेदि ।

---

१ वृन्दे, पश्य सानुरागहासं परिहसे निकुञ्जविद्यया । तद्गत्वा मिलिष्यामि ।

२ इयं राधिका निकुञ्जविद्यां परिरब्धुं भुजवल्लीमुल्लासयन्ती प्रेमविश्रब्धं जल्पति । हला भाण्डीरदेवते, पश्य । गोकुलप्रवेशवेला प्रत्यासीदति, तत्कार्यतामस्मासु लीलारङ्गसंगमितः कृष्णस्य प्रसादः ।

३ वृन्दे, एषा तव भगिनी राधिकां परिरम्य चुम्बति ।

४ दृष्टा निर्लज्जया तव निकुञ्जविद्यया पुरुषधर्मलुब्धता । यदेषा राधावक्षोरुहे नखराङ्कुरानर्पयति ।

---

मूरुद्वयम् । एवं सर्वत्र । मृदूनामर्थानां वस्तूनां पद्मानां कठिनं कठोरमवष्टम्भकं विना स्थितिर्न स्यादिति हेतोरशनिमन्तर्हृदयं व्यथित अकरोत् ॥ **गोकुलेति ।**

**वृन्दा**—(सस्मितम्।) सखि, माभ्यसूयां कुथाः। प्रेमोत्कर्षविलासोऽयम्।

(प्रविश्य सोत्कम्पा।)

**राधिका**—(सभ्रूभङ्गम्।) [1]वुन्दे, जुत्तं जुत्तं अम्हेसु तुम्ह जिम्हत्तणम्।

**वृन्दा**—(विहस्य।) सखि, न वेद्मि किं तवाकूतम्।

**सख्यौ**—(सस्मितम्।) [2]वुन्दे, विण्णादा दे मोहिणीभूदा णिउञ्जविज्जा।

(ततः प्रविशति सपुत्रा जटिला।)

**जटिला**—[3]वच्छा अहिमण्णो, पेक्ख पङ्गणे रङ्गिणी तह तण्डविओ वि सिहण्डी चिट्ठइ।

**अभिमन्युः**—[4]अम्ब, सच्चं कहेसि। जं दिट्ठं मए गोगोवमण्डलेण सद्धं एक्को ज्जेव रामो गोउलं पइट्ठो।

---

१ वृन्दे, युक्तं युक्तमस्मासु तव जिह्मत्वम्।

२ वृन्दे, विज्ञाता ते मोहिनीभूता निकुञ्जविद्या।

३ वत्साभिमन्यो, पश्य प्राङ्गणे रङ्गिणी तथा ताण्डविकोऽपि शिखण्डी तिष्ठति।

४ अम्ब, सत्यं कथयसि। यद्दृष्टं मया गोगोपमण्डलेन सार्धमेक एव रामो गोकुलं प्रविष्टः।

---

हे गोकुलरामाणां प्रेयसि, पक्षे गोकुलरामाः प्रेयस्यो यस्य कृष्णस्य। बहुप्रेयसी राजा इतिवत्। 'ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्यः' इति ह्रस्वनिषेधात्स्त्रीप्रत्ययस्या-

जटिला—वेच्छ, एसा विसारिणी कावि सोरब्भधारा ज्जेव तं साहसिअमिहुणं एत्थ कहेइ ।

अभिमन्युः—अम्ब, भवदीए णिदेसो वि मए पडिवालिदो अज्ज संवुत्तो । ता दाणिं राहिअं महुरापुरे णइस्सम् ।

जटिला—पुत्त, दिट्ठिआ एक्कदुआरं घरं । ता दुआरभित्तिए लग्गा भविअ सुणम्ह पत्थावम् ।

(इति तथा स्थितौ ।)

(प्रविश्य ।)

कृष्णः—(सस्मितम् ।) राधे, मा स्म कार्षीरतिदुर्लभेऽस्मिन्नर्थे प्रार्थनाम् ।

राधिका—(सनर्मस्मितम् ।) अइ देइ, पसीद पसीद ।

अभिमन्युः—(गृहं प्रविश्य ।) हुं साहसिणि, पच्चक्खं हत्थाहत्थि गहीदासि ।

---

१ वत्स, एषा विसारिणी कापि सौरभ्यधारैव तं साहसिकमिथुनमत्र कथयति ।

२ अम्ब, भवत्या निदेशोऽपि मया प्रतिपालितोऽद्य संवृत्तः । तदिदानीं राधां मथुरापुरे नयिष्यामि ।

३ पुत्र, दिष्ट्या एकद्वारं गृहम् । तद्द्वारभित्त्या लग्ना भूत्वा शृणुवः प्रस्तावम् ।

४ अयि देवि, प्रसीद प्रसीद ।

५ हुं साहसिनि, प्रत्यक्षं हस्ताहस्ति गृहीतासि ।

---

विकृतित्वात् 'यूस्त्र्याख्यौ नदी' इत्यत्र स्त्रीप्रत्ययस्यैव नदीसंज्ञाकरणात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः । प्रवणां नम्राम् ॥ **मा स्म कार्षीरिति** । प्रत्युत्तरं पूर्व-

**कृष्णः**—(स्वगतम्।) हन्त, स्वरादभिमन्युमभिज्ञाय कातरेयं प्रिया यष्टिवद्भूमौ निपपात।

**जटिला**—(सविस्मयमङ्गुल्या दर्शयन्ती।) [1]वच्छ, लोओत्तरेण लाअ-ण्णभरेण का एसा गोरी घरं उज्जलेइ।

**अभिमन्युः**—(विमृश्य।) [2]अम्ब, देइ, पसीद पसीद त्ति भणिअ राहीए दण्डप्पणामो किदत्थि। ता एसा दिव्वरूपा महेसमहिसी फुडं पादुब्भूदा।

**कृष्णः**—(सहर्षमात्मगतम्।) गौरीनेपथ्यं मम सुष्ठु पथ्यं बभूव।

**सख्यौ**—(सानन्दम्।) [3]गोवुत्तम, तुम्हाणं अम्वेडिदेण अम्हेहिं आराहिज्जन्ती गौरी पडिमादो णिक्कमिदा।

**अभिमन्युः**—[4]विसाहे, किं दाणिं देइपादे सुदुल्लहं राहीए अब्भ-त्थिदम्।

**कृष्णः**—वीराभिमन्यो, दारुणं किमपि संकटं तवोपस्थितम्। तन्निवृत्तिमियं याचते।

---

१ वत्स, लोकोत्तरेण लावण्यभरेण कैषा गौरी गृहमुज्ज्वलयति।

२ अम्ब, देवि, प्रसीद प्रसीदेति भणित्वा राधया दण्डवत्प्रणामः कृतो-ऽस्ति। तदेषा दिव्यरूपा महेशमहिषी स्फुटं प्रादुर्भूता।

३ गोपोत्तम, युष्माकमाम्रेडितेनास्माभिराराध्यमाना गौरी प्रतिमातो नि-ष्क्रमिता।

४ विशाखे, किमिदानीं देवीपादे सुदुर्लभं राधयाभ्यर्थितम्।

---

कृतस्य कृष्णस्य प्रसादः कार्यतामिति प्रार्थनस्य॥ **अम्बेति**। मातः जटिले॥ **गोवुत्तम इति**। आम्रेडितेन द्विरुक्तेन॥ **हन्तेति**। बल्लवीकुलदेवते

**अभिमन्युः**—(सशङ्कम् ।) [१]भअवदि, केरिसं तम् ।

**कृष्णः**—वृन्दे, तदभिव्यक्तये संकुचन्ति मे वचनानि । ततस्त्वया कथ्यताम् ।

**वृन्दा**—मानिन्नभिमन्यो, परश्वस्त्वं भोजेश्वरेण भैरवाय सायमुपहारीकर्तव्योऽसि ।

**जटिला**—(सवैक्लव्यम् ।) [२]देइ, पसीद पसीद । जीअपुत्तिअं मं करेहि ।

**राधिका**—(सहर्षमुत्थाय ।) [३]देइ, पसीद पसीद ।

**कृष्णः**—(स्मित्वा ।) राधे, वर्णितमेव ते । यदद्य दुर्निवारमिदम् ।

**राधिका**—(सकाकुभरं प्रणम्य ।) [४]हन्त बल्लवीउलदेअदे, किं पि असक्कं दे णत्थि । ता तुए णाहेण अविप्पओअं पसादीकदुअ अणुगेह्णीअदु एसो जणो ।

**कृष्णः**—(स्मित्वा ।)

वशीकृतात्मासि वशीन्द्रदुष्करैस्तवाद्य राधे नवभक्तिदामभिः ।
तदिष्टसिद्धिं कृतगोकुलस्थितिः सदा मदाराधनतस्त्वमाप्स्यसि ॥ ५७ ॥

---

१ भगवति, कीदृशं तत् ।

२ देवि, प्रसीद प्रसीद । जीवत्पुत्रां मां कुरु ।

३ देवि, प्रसीद प्रसीद ।

४ हन्त बल्लवीकुलदेवते, किमप्यशक्यं ते नास्ति । तस्मात्त्वया नाथेनाविप्रयोगं प्रसादीकृत्यानुगृह्यतामेष जनः ।

---

बल्लवीनां कुलदेवते, बल्लवसमूहानां देवते इति च । नाथेनाभिमन्युनेति जटिलां ज्ञापयितुमभिप्रेतोऽर्थः । वस्तुतस्तु त्वया नाथेनेति समानाधिकरण्यम् ॥ **वशीकृतेति** । वशीन्द्रदुष्करैर्जितेन्द्रियाणां दुष्करैर्भक्तिदामभिः । तेन त्वं सतीचूडा-

**अभिमन्युः**—(सोच्छ्वासम् ।) [1]अइ भत्तजणवच्छले, कदा वि महुराहिमुही मए ण राहिआ कादव्वा । ता इह वसन्ती तुमं एसा आराहेदु ।

**जटिला**—(राधामालिङ्ग्य ।) [2]अइ गोउलणन्दिणि, रक्खिदम्हि ।

**वृन्दा**—(अभिमन्युमवेक्ष्य ।)

विध्वंसयति हि पुंसां साध्वी परिवादितायूंषि ।
परदेवतात्र गौरी भावग्राहिण्यसौ वदतु ॥ ५८ ॥

**कृष्णः**—धन्याभिमन्यो, कल्याणसाधिका ते राधिका । तदस्यां नाविस्रब्धेन भवितव्यं भवता ।

**अभिमन्युः**—[3]देइ, राहीवेसं कदुअ सुबलेण अम्बा मे परिहसिज्जइ । तं पेक्खिअ मच्छरी अणहिण्णो मिच्छाहिसत्तिं उप्पावेदि ।

---

१ अयि भक्तजनवत्सले, कदापि मथुराभिमुखी मया न राधिका कर्तव्या । तदिह वसन्ती त्वामेषाराधयतु ।

२ अयि गोकुलनन्दिनि, रक्षितास्मि ।

३ देवि, राधावेशं कृत्वा सुबलेनाम्बा मे परिहसिष्यति । तत्प्रेक्ष्य मत्सरी अनभिज्ञो मिथ्याभिसक्तिमुत्पादयति ।

---

मणिरसीति ज्ञाप्यते । तत्तस्मात्कृतगोकुलस्थितिः सतीत्यनेन मथुराप्रस्थानं वारयति । मदाराधनत इत्यनेन सदागमने जटिलाया आज्ञां कारयति ॥ **विध्वंसयतीति** । साध्वी परिवादिता कर्त्री आयूंषि विध्वंसयसि । परदेवतेत्यनेनैतद्वाक्ये । चेद्विश्वासं न करोषि तर्हि मरिष्यसीति द्योत्यते ॥ **देवीति** । मिथ्याभिसक्तिं

**ललिता**—[1]अहिमण्णो, दिट्ठिआ सअं चेअ वीसत्थोसि ।

**अभिमन्युः**—[2]अम्ब, एहि मम घरं । सव्वस्साइं महुरापुरे णेदुं णिजुत्तं जणं णिवारेम्ह । (इत्यम्बया सह हरिं प्रणम्य निष्क्रान्तः ।)

**सख्यौ**—(राधामाश्लिष्य सास्रम् ।) [3]हा पिअसहि, कधं पामरेहिं तुमं महुरापुरे णेदुं णिच्चिदासि ।

(प्रविश्य ।)

**पौर्णमासी**—(सानन्दस्मितम् ।)

अङ्गरागेण गौराङ्गी हिरण्यद्युतिहारिणी ।
मामग्रे रञ्जयत्येषा निकुञ्जकुलदेवता ॥ ५९ ॥

**कृष्णः**—(परिक्रम्य ।) भगवति, वन्दे ।

**पौर्णमासी**—आशीःशतम् । हन्त यशोदामातः, दिष्ट्या भवताद्य संवर्धितास्मि यदहं राधिकाविश्लेषवेदनानामनभिज्ञीकृता ।

**कृष्णः**—

उत्तीर्णा परमभयाद्बभूव राधा
　निर्बाधाजनि भवती गताधिसूचिः ।
निःशङ्कं प्रमदमितास्तथाद्य सख्यः
　कर्तव्यं भगवति किं प्रियं तवास्ति ॥ ६० ॥

---

१ अभिमन्यो, दिष्ट्या स्वयमेव विश्वस्तोऽसि ।

२ अम्ब, एहि मम गृहम् । ·········मथुरापुरे नेतुं नियुक्तं जनं निवारयामः ।

३ हा प्रियसखि, कथं पामरैस्त्वं मथुरापुरे नेतुं निश्चितासि ।

---

1. 'च्छेद' इति सटीकपुस्तकपाठः.

**पौर्णमासी**—(सानन्दास्रम् ।) गोकुलबन्धो, बाढमवन्ध्यजन्मास्मि कृता । तथापि किंचिदभ्यर्थये ।

प्रथयन्गुणवृन्दमाधुरीमधिवृन्दावनकुञ्जकन्दरम् ।
सह राधिकया भवान्सदा शुभमभ्यस्यतु केलिविभ्रमम् ॥ ६१ ॥

किंच ।

अन्तःकन्दलितादरः श्रुतिपुटीमुद्घाटयन्सेवते
यस्ते गोकुलकेलिनिर्मलसुधासिन्धूत्थबिन्दूनपि ।
राधामाधविकामधो मधुरिमास्वाराज्यमस्वार्जय-
न्साधीयान्भवदीयपादकमले प्रेमोर्मिरुन्मीलतु ॥ ६२ ॥

**कृष्णः**—(स्मित्वा ।) भगवति, तथास्तु । तदेहि । गोदोहावसाने मामप्रेक्ष्य चिन्तयिष्यन्तौ पितरावविलम्बं गोकुलं प्रविश्य नन्दयावः । (इति निष्क्रान्तः ।)

(इति निष्क्रान्ताः सर्वे ।)

इति गौरीविहारो नाम सप्तमोऽङ्कः ।

---

कलङ्कम् ॥ **हन्तेति** । यशोदा माता यस्य । हन्तेति हर्षे ॥ **अन्तःकन्दलीति** । हे राधिकारूपमाधविकाया मधो वसन्तस्वरूप । साधीयान् साधुतरः, अतिशयतरो वा ॥ **नन्देति** । नन्दा नव । सिन्धुरा अष्टौ । बाणाः पञ्च । इन्दुरेकः । एवम् 'अङ्कस्य वामा गतिः' इत्यनुसारेण ज्ञेया अङ्काः १५८९ ॥ समाप्तश्चायं विदग्धमाधवः ॥

ग्रन्थसमाप्तिः ।

राधाविलासं वीताङ्कं चतुःषष्टिकलाधरम् ।
विदग्धमाधवं साधु शीलयन्तु विचक्षणाः ॥ १ ॥
नन्दसिन्धुरबाणेन्दु(१५८९)संख्ये संवत्सरे गते ।
विदग्धमाधवं नाम नाटकं गोकुले कृतम् ॥ २ ॥

शान्तश्रियः परमभागवताः समन्ता-
द्वैगुण्यपुञ्जमपि सद्गुणतां नयन्ति ।
दोषावलीमपरितापितया मृदूनि
ज्योतींषि विष्णुपदभाञ्जि विभूषयन्ति ॥ ३ ॥

---

समाप्तमिदं विदग्धमाधवं नाम नाटकम् ।

# विदग्धमाधवीयश्लोकानुक्रमणिका ।



